# काव्यप्रकाशः

अलंकारसंदर्भः

## मम्मटभट्टविरचितः

पुण्यपत्तनस्थराजकीयप्रधानपाठशालायां दक्षिणकॉलेजाभिधायाम्
अलंकारव्याकरणाध्यापकेन श्रीयुतडाक्टरकीलहार्नाभिधस्य
श्रीयुतडाक्टरभाण्डारकरोपनामकरामकृष्णाभिधस्य च वि-
दुषो निदेशमनुवर्तमानेन झळकीकरोपनाम्ना

भट्टवामनाचार्येण

विरचितया बालबोधिन्याख्यटीकया समन्वितः,
तेनैव संशोधितः ।



स च

राजानुशासनेन मुम्बापुर्याख्यनगर्यां निर्णयसागराख्ययन्त्रालये मुद्रितः ।



शकाब्दाः (१८११) एकादशोत्तराष्टादशशतीमिताः ।

तथा,

खिस्ताब्दाः (१८८९) एकोननवत्युत्तराष्टादशशतीमिताः ।

अस्य मूल्यम् आणकाष्टकसहितं रूपकचतुष्टयम् (४॥ रु०)

# अथ प्रस्तावना.

१. काव्यप्रकाशोऽयमलंकारशास्त्रग्रन्थेष्वेकतमो निबन्धः। यस्मिन् खल्ववगते काव्यस्य निर्माणे स्वरूपदोषगुणालंकारादीनामवधारणे च शक्तिरुन्मिषति, तदलंकारशास्त्रम्। यथा च व्याकरणं भाषायां व्युत्पत्त्यै अपेक्ष्यते, तथा अलंकारशास्त्रमपि काव्ये नैपुण्यायेति (१) एतदपि अवश्यमध्येतव्यश्रेण्यामन्तर्भावमर्हति ॥

२. अलंकारशास्त्रं कदा केन प्रथममाविष्कृतमिति निर्णेतुं न शक्यमस्माभिः। परंतु, प्रसिद्धेषु सर्वेषु अलंकारनिबन्धेषु कालिदासकृतेरुद्धरणात्कालिदासादुत्तरकालमेवास्य बाहुल्येन चर्चाऽजनीति संभाव्यते इति विवरणकाराः।

वयं त्वित्थमवधारयामः, अग्निपुराणे भगवता वेदव्यासेन सर्वस्यापि काव्यप्रपञ्चस्य कथनात् कालिदासात्पूर्वकालेऽप्यस्य चर्चा आसीदिति। तथा हि, अग्निपुराणे ३४२ अध्याये, ३४३ अध्याये च "स्यादावृत्तिरनुप्रासो वर्णानां, पदवाक्ययोः"—इत्यादिना अनुप्रासादयः शब्दालंकाराः, "अलंकरणमर्थानामर्थालंकार इष्यते। तं विना शब्दसौन्दर्यमपि नास्ति मनोहरम् ॥ अर्थालंकाररहिता विधवेव सरस्वती ॥"—इत्युपक्रम्य "उपमा नाम सा यस्यामुपमानोपमेययोः। सत्ता चान्तरसामान्ययोगित्वेऽपि विवक्षितम् ॥ किंचिदादाय सारूप्यं लोकयात्रा प्रवर्तते ॥"—इत्यादिना उपमादयोऽर्थालंकाराश्च लक्षिताः। तथा, ३३६ अध्याये "संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली। काव्यं, स्फुटदलंकारं गुणवद्दोषवर्जितम् ॥"—इत्यादिना काव्यस्यापि लक्षणमुक्तम्। किं बहुना, रत्यादिभाववर्गोऽयं यमाजीव्योपजायते। आलम्बनविभावोऽसौ नायकादिभवस्तथा ॥"—इत्यादिना, "विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते। विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः ॥" इत्यादिना च विभावस्तद्भेदोऽपि लक्षितः। किंच, "वाग्विद्यासप्रतिज्ञाने रीतिः सापि चतुर्विधा। पाञ्चाली गौडदेशी च वैदर्भी लाटजा तथा ॥"—इत्यादिना चतुर्धा रीतिरप्युक्ता। एवंचास्यालंकारशास्त्रस्याग्निपुराणं मूलमिति ॥

---

१ न केवलमलंकारशास्त्रं विना काव्ये नैपुण्यमेव न भवति, अपितु वाक्यदोषादोषदृष्टिरपि न जायते। यो हि अलंकारशास्त्रं न जानाति, केवलं व्याकरणादिकमेव जानाति, स कथं जानीयात्। 'चिन्तारत्नमिव च्युतोऽसि करतः'—इति 'गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः'—इति चानयोस्तुल्येऽपि उपमानोपमेययोर्लिङ्गभेदे पूर्वं दुष्टं न परमिति। एवं जघनकाञ्चीकर्णावतंसपदयोरविशिष्टेऽपि पौनरुक्त्ये पूर्वं दुष्टं परमदुष्टमिति। यथा च पूर्वस्य दुष्टत्वं न परस्य, तथा क्रमेण ८३९ पृष्ठे, ८४० पृष्ठे, ४६२ पृष्ठे, ४५९ पृष्ठे च प्रकाशकृता प्रतिपादितम् ॥

३. सत्यप्यस्मिन् दोषगुणादीनामपि निरूपणीयत्वेऽस्यालंकारनाम्नैव व्यपदेशस्य बीजं वय तत्त्वतो न विद्मः । परंतु, अलंक्रियतेऽनेनेति करणव्युत्पत्तिनिष्पन्नो यमकोपमादिबोधको नायमलंकारशब्दः, किंतु, अलंकृतिरलंकार इति भावव्युत्पन्नो दोषापगमगुणालंकारसंवलनकृतसौन्दर्यपरः, तत्प्रतिपादकत्वादेवास्यालंकारनाम्ना व्यपदेश इत्युद्भावयामः । अत्र साधक च वामनसंदर्भमुदाहरामः, " काव्यं ग्राह्यमलंकारात् । १ । ०००००० । सौन्दर्यमलंकारः । २ । अलंकृतिरलंकारः । करणव्युत्पत्त्या पुनरलंकारशब्दो यमकोपमादिषु वर्तते । स दोषगुणालंकारहानोपादानाभ्याम् । ३ । स खलु अलंकारो दोषहानात् गुणालंकारयोरादानाच्च संपाद्यः कवेः "—इति—इति विवरणकाराः ।

वयं त्वित्थमपि तर्कयामः,—यथा, प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानरूपाणां षोडशपदार्थानां प्रतिपादकमपि गौतमशास्त्रं परार्थानुमानपर्यायस्य न्यायस्य सकलविद्यानुग्राहकतया सर्वकर्मानुष्ठानसाधनतया च तत्र शास्त्रे प्रधानत्वेन न्यायशास्त्रमिति व्यपदिश्यते, "प्राधान्येन व्यपदेशा भवन्ति "—इति न्यायात्, तद्वत्, दोषगुणादीनां प्रतिपादकमपि इदं शास्त्रं यमकोपमादीनामलंकाराणाम् आबालवृद्धप्रसिद्धतया काव्यव्यवहारप्रयोजकतया चात्र शास्त्रे प्रधानत्वेन तत्प्रतिपादकत्वादेवालंकारशास्त्रमिति व्यपदिश्यते । अलंकाराणां काव्यव्यवहारप्रयोजकत्वं च " काव्यवृत्तेस्तदाश्रयात् "—इत्यादिना पञ्चमोल्लासे ( २४० पृष्ठे ) मम्मटभट्टैरेवोक्तम् । व्याख्यातं चोद्द्योतकारैः, " अलंकारकृतचारुत्वेनैव शब्दार्थयोः काव्यत्वनिर्वाहात् "—इति । किंचाष्टमोल्लासे ( ५२९ पृष्ठे )ऽप्युक्तम्, " स्वर्गप्राप्तिरनेनैव—इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्तकौ "—इति । दशमोल्लासेपि ( ७७१ पृष्ठे ) उक्तम् " अविरलकमलविलासः—इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न पुनर्हेत्वलंकारकल्पनया "—इति—इति ॥

४. अत्र हि काव्यप्रकाशे ( ८६ पृष्ठे ) भट्टलोल्लटः, ( ८९ पृष्ठे ) श्रीशङ्कुकः, ( ९० पृष्ठे ) भट्टनायकः, ( ९६ पृष्ठे ) अभिनवगुप्तः, ( २४० पृष्ठे ) ध्वनिकारः ( आनन्दवर्धनः ), ( ५९७ पृष्ठे ) वामनः, ( ५८४ पृष्ठे ) रुद्रटः,—इत्यादीनि ग्रन्थकाराणां नामान्युपलभ्यन्ते । अतोऽयं मम्मटस्तेभ्योऽर्वाचीन एव । उक्तं च विवरणकारैरपि, " अलंकारनिबन्धाश्च बहवो विद्यन्ते, तेष्वस्मदवलोकितानां शौद्धोदनिसूत्र—वाभटालंकार—वामनसूत्रवृत्ति—दण्डिकृतकाव्यादर्श—भोजदेव ( भोजराज ) कृतसरस्वतीकण्ठाभरण—महिभट्टकृतव्यक्तिविवेक—अभिनवगुप्तकृतालोचनग्रन्थानामधस्तनः, पीयूषवर्षकृतचन्द्रालोक—अप्पदीक्षितकृतचित्रमीमांसा—तत्कृतकुवलयानन्द—विश्वनाथकृतसाहित्यदर्पण—गोविन्दठक्कुरकृतकाव्यप्रदीप—जगन्नाथकृतरसगङ्गाधर—केशवमिश्रकृतालंकारशेखर—प्रभाकरकृतालंकाररहस्यानामूर्ध्वतनोऽयं काव्यप्रकाशः "—इति ॥

५. 'मम्मटेन कदा काव्यप्रकाशो निरमायि ? '—इति प्रश्नस्य उत्तरतया खृस्त १३३९ मिताव्दात् पूर्वमेव निरमायीत्येतावन्मात्रमवधृत्योच्यते, यतः १३३९ मिताव्द-कालीनेन माधवाचार्येण सर्वदर्शनसंग्रहे पातञ्जलदर्शनप्रस्तावे 'तदुक्तं काव्यप्रकाशे'—इत्यादिना काव्यप्रकाशोऽधारि इति—इति विवरणकाराः ।

वयं तु खृस्ताव्दानामेकादशशतकस्य ( सन्न ११०० ) चरमभागे मम्मटेन काव्यप्रकाशो निरमायीति निश्चिनुमः, यतोऽयं मम्मटः सरस्वतीकण्ठाभरणकर्तुर्भोजराजादर्वाक्तनः, काव्यप्रकाशटीकाकर्तुर्माणिक्यचन्द्रादूर्ध्वतनश्चेति । मम्मटेनैव दशमोल्लासे (७४७ पृष्ठे ) उदात्तालंकारोदाहरणतयोपन्यस्तः "भोजनृपतेस्तत्त्यागलीलायितम्" इति पद्यांश एव मम्मटस्य भोजराजादर्वाक्तनत्वं स्पष्टं व्यनक्ति । उक्तभोजराजस्य स्थितिकालस्तु खृस्त ९९६ वत्सरादारभ्य १०५१ वत्सरपर्यन्त इति सकलविद्वज्जनप्रसिद्धमेव । माणिक्यचन्द्रादूर्ध्वतनत्वं तु स्फुटमेव, यतो माणिक्यचन्द्रेण खृस्त ११६० वर्षे संकेताख्या काव्यप्रकाशटीकाऽकारि । स्फुटीकरिष्यते चेदं १३ प्रघट्टे माणिक्यचन्द्रप्रस्तावनायामिति तत एव द्रष्टव्यम् । किंच ग्रन्थकारोक्तयोऽपि मम्मटस्य भोजराजादर्वाक्तनत्वं स्पष्टं द्योतयन्ति, तथा हि, दशमोल्लाससमाप्तौ काव्यप्रकाशटीकायां संकेताभिधायां "श्रीभोजेन जैमिन्युक्तपट्प्रमाणानि संभवश्चालंकारतयोक्तानि, केषाचिदुक्तेष्वन्तर्भावात् केषांचिदचमत्कारित्वात् केषांचित्काव्यशरीरत्वाच्च तानि नात्र (काव्यप्रकाशे) काव्यालंकारतया प्रतिपादितानि "—इति माणिक्यचन्द्रोक्तिः । पञ्चमोल्लासे (२२२ पृष्ठे) उदाहृतस्य 'अत्युच्चाः परितः स्फुरन्ति गिरयः "—इति पद्यस्य व्याख्यानावसरे " पञ्चाक्षरीनामा कविरनेन श्लोकेन भोजराजं स्तुतवान् "—इति दीपिकायां जयन्तभट्टोक्तिः । प्रथमोल्लासे ( ३पृष्ठे ) ' श्रीहर्षादेर्धावकादीनामिव धनम् '—इति प्रतीके "आदिपदात् भोजप्रबन्धकारिभिर्भोजात्, माघकारिभिर्भोवाख्यवैश्यात् बहुतरं धनं प्राप्तमित्याद्यूह्यम् "—इति सुधासागरे भीमसेनोक्तिश्चेति दिक् ॥

६. काव्यप्रकाशकृतो मम्मटस्येतिवृत्तं न किमप्यासादितमस्माभिः, केवलं निदर्शनग्रन्थात् एतदवगम्यते, यत् शैवोऽयमासीदिति । मम्मटः कं देशं जन्मना अलंचकारेति निर्णयप्रवृत्ताः, कदाचित् ' काश्मीरदेशीयः '—इति संभावयामः, यदस्य मम्मटेति नाम देशान्तरासुलभस्य काश्मीरेतिहासराजतरङ्गिणी—सप्तमतरङ्ग—१०४१ श्लोकाद्युल्लिखितधम्मटेति नाम्नः सादृश्यमनुभवति इति विवरणकाराः प्राहुः ।

वयं तु वदामः, काव्यप्रकाशकृतो मम्मटस्येतिवृत्त वह्वासादितमस्माभिरिति । तथा हि, अयं मम्मटः काश्मीरदेशीयः जैयटपुत्रः वाराणसीमागत्याधिगतानेकविद्यः । अस्य च मम्मटस्य व्याकरणमहाभाष्यटीकाकर्ता कैयटः, चतुर्वेदभाष्यकर्ता औवटश्चेति द्वावपि कनिष्ठौ भ्रातराविति । अत एव काव्यप्रकाशदर्पणे पञ्चमोल्लासे ( २६१ पृष्ठे ) चिङ्कुपद-

व्याख्यानावसरे विश्वनाथेनोक्तम्, "चिक्कुपदं काश्मीरादिभाषायामश्लीलार्थबोधकम्"-इति । वर्णितं च तदेतत्सर्वं सुधासागराख्यटीकायामारम्भ एव भीमसेनेनापि । तथा हि,-

"शब्दब्रह्म सनातनं न विदितं शास्त्रैः क्वचित्केनचित्,
तद्देवी हि सरस्वती स्वयमभूत्काश्मीरदेशे पुमान् ।
श्रीमज्जैयटगेहिनीसुजठराज्जन्माप्य (१) युग्मानुजः
श्रीमन्मम्मटसंज्ञयाऽऽश्रिततनुं सारस्वतीं सूचयन् ॥ ४ ॥
मर्यादां (२) किल पालयन् शिवपुरीं (३) गत्वा प्रपठ्यादरात्
शास्त्रं, सर्वजनोपकाररसिकः साहित्यसूत्रं (४) व्यधात् ।
तद्वृत्तिं च विरच्य गूढमकरोत्काव्यप्रकाशं स्फुटं
वैदग्ध्यैकनिदानमर्थिषु चतुर्वर्गप्रदं सेवनात् ॥ ५ ॥
कस्तस्य स्तुतिमाचरेत् कविरहो, को वा गुणान्वेदितुं
शक्तः स्यात्किल मम्मटस्य भुवने वाग्देवतारूपिणः ।
श्रीमान्कैयट औवटो ह्यवरजो यच्छात्रतामागतो
भाष्याब्धिं निगमं (५) यथाक्रममनुव्याख्याय सिद्धिं गतः ॥ ६ ॥
काव्यं वर्णद्वयं यद्विवृतिमुपगतं सर्वशास्त्रार्थसारो-
द्धारं कुर्वद्रसेन श्रुतिगतमपि दुर्ज्ञेयमाद्यं व्यनक्ति ।
सा देवी मम्मटाख्या निजविकटकृतिव्याकृतिव्याकुलं मां (६)
मज्जन्तं मोहसिन्धौ परमकरुणया प्राप्तपारं करोतु ॥ ७ ॥
व्याख्यातं हि पुराऽत्र यैः, सुकवयः सर्वे महापण्डिताः
ते वन्द्याः सुतरां, न तेषु मम कोऽप्यस्त्याग्रहः स्पर्धितुम् ।
किंतु ग्रन्थसहस्रसारमपि यद्वृत्त्या विरुद्धं वचः,
तत् क्षन्तुं न समुत्सहे, न च पुनर्भीतिः सुरेज्यादपि ॥ ८ ॥"

-इति ।

अत्र केचित्, तदिदं भीमसेनोक्तं सर्वमपि साधकप्रमाणतां प्रतिपद्यते, परंतु "मम्मटस्य भ्राता औवटः" इत्यंशस्तु संशयपद्धतिमध्यास्ते, औवटकृतयजुर्वेदभाष्यपुस्तके

१ आप्य प्राप्य ॥ २ ननु सरस्वत्यवतारस्य मम्मटस्य शिवपुरीं गत्वा शास्त्रपठनं किमर्थमित्याशङ्कायामाह मर्यादामिति । लौकिकमर्यादामित्यर्थः ॥ ३ शिवपुरीं वाराणसीम् ॥ ४ काव्यप्रकाशसूत्रम् ॥ ५ भाष्याब्धिं व्याकरणमहाभाष्यसमुद्रम् । निगमं वेदम् ॥ ६ निजा स्वीया विकटा भयंकरा या कृतिः काव्यप्रकाशरूपा तस्या व्याकृतौ व्याख्यानविषये व्याकुलं भीतं मां भीमसेनाख्यम् ॥

"ऋग्याद्यींश्च पुरस्कृत्य अवन्त्याम् (१) उवटो वसन्।
मन्त्रभाष्यमिदं चक्रे भोजे राष्ट्रं प्रशासति ॥"

—इति वचनोपलम्भात्। तथा, तस्यैव यजुर्वेदभाष्यस्य पुस्तकान्तरेऽपि

"आनन्दपुर-(२)-वास्तव्यवज्रटाख्यस्य सूनुना।
मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति ॥"

—इतिवचनोपलम्भाच्च। तस्मादेतद्वचनद्वयप्रामाण्यात् उवटो मालवदेशीयः भोजराजसमकालिकश्च स्यादिति वदन्ति। वस्तुतस्तु, उक्तवचनद्वयस्य प्रामाणिकत्वेऽपि भीमसेनोक्तं सम्यगेवेत्यस्माकं प्रतिभाति, यतो वज्रट इति उवट इति च टान्तं नामद्वयं काश्मीरं विना देशान्तरासुलभानां पूर्वोक्तमम्मट–जैयट–कैयट–उद्भट–रुद्रट–इत्यादिनाम्नां सादृश्यमनुभवतीति। न च कैयटभ्रातुर्मम्मटस्य जैयटपुत्रत्वान्मम्मटानुजस्योवटस्यापि जैयटपुत्रत्वेन वज्रटसूनुत्वकथनं विरुध्यते इति शङ्कनीयम्, काश्मीरदेशीयस्य जैयटसगोत्रस्य वज्रटाख्यस्य दत्तकपुत्रत्वेन संभावनीयतया विरोधाभावात्। न चैवमपि "अवन्त्यामुवटो वसन्"—इत्यंशविरोध इति वाच्यम्, राजाश्रयेणावन्त्यामपि वाससंभवात्। न च भोजसमकालिकत्वं विरुद्धमिति वाच्यम्, भोजपदेन सरस्वतीकण्ठाभरणकृन्महाभोजकुलोत्पन्नस्य कस्यचिद्भोजस्य ग्रहणात्। भोज इति तेषां राज्ञां कुलस्य नामेति सर्वजनप्रसिद्धमित्यलं प्रसक्तानुप्रसक्त्या।

मम्मटेनायं काव्यप्रकाशः परिकरालंकारपर्यन्त एव कृतः, शेषांशस्तु अल्लटसूरिणा पूरितः। तदुक्तं निदर्शनाख्यटीकायां परिकरालंकारे (७६३ पृष्ठे) आनन्दकविना, "कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः। प्रबन्धः, पूरितः शेषो विधायाल्लटसूरिणा॥"—इति। उक्तं च तस्यामेव टीकायां दशमोल्लासे 'इत्येष मार्गो विदुषाम्'—इति श्लोकव्याख्यानावसरे (८९२ पृष्ठे "काव्यप्रकाशदशकेऽपि निबन्धकृद्भ्यां द्वाभ्यां कृतेऽपि कृतिनां रसतत्त्वलाभः। लोकेऽस्ति विश्रुतमिदं नितरां रसालं वन्यप्रकाररचितस्य (३) तरोः फलं यत् ॥"—इति। उक्तं चैवमेवान्यैरपि बहुभिष्टीकाकारैः। तदेतत्सर्वं स्पष्टीकृतमस्माभिः 'इत्येष मार्गो विदुषाम्'—इतिश्लोकव्याख्यानावसरे इति तत एव द्रष्टव्यम् ॥

अनेन हि मम्मटेन शब्दव्यापारविचाराख्यो ग्रन्थोऽपि निर्मितः, स च ग्रन्थोऽस्या पुण्यपत्तनस्थराजकीयप्रधानपाठशालायां (दक्षिणकॉलेजसंज्ञकायाम्) अद्यापि वरीवर्ति

१ अवन्त्याम् उज्जयिन्याम् ॥ २ आनन्दपुर गुर्जरदेशे प्रसिद्धम् ॥ ३ वन्यप्रकारेति। मूलपुस्तके तु 'तन्वप्रकार'—इत्यतिसदिग्धः पाठो दृश्यते। वने भवो वन्यो वृक्षस्तस्य प्रकाराभ्या भेदाभ्या रचितस्येत्यर्थ, कलमो—इति देशभाषाया प्रसिद्धस्येति भावः। "प्रकारौ भेदसादृश्ये"—इत्यमर ॥

अयं हि मम्मटोऽनुपमः पण्डितः, अत एव वैयाकरणसिद्धान्तमञ्जूषादौ "तदुक्तं काव्यप्रकाशे"—इत्यादिना ग्रन्थेन काव्यप्रकाशमतं स्वकल्पितेऽर्थे प्रमाणत्वेनोपन्यस्तवन्तो नागोजीभट्टादयः। अत एव चायं मम्मटो भीमसेनेन सुधासागरे वाग्देवतावतारत्वेन वर्णितः। अत एव च तत्रैव सुधासागरे काव्यप्रकाशस्य शैथिल्यमापादयन्तं गोविन्दठक्कुरकृतं काव्यप्रदीपं युक्तिप्रयुक्तिभिः खण्डयित्वा काव्यप्रकाशस्य निष्कलङ्कत्वं संस्थाप्योक्तं भीमसेनेन, "तस्माद्गोविन्दमहामहोपाध्यायानामीर्ष्यामात्रमवशिष्यते, न हि गीर्वाणगुरवोऽपि श्रीवाग्देवतावतारोक्तिम् (मम्मटोक्तिम्) आक्षेप्तु प्रभवन्ति, किं पुनर्मानुषा मशकाः। सुष्ठूक्तं खलु देवनाथतर्कपञ्चाननैः,—

'य (१) एष कुरुते मनो विपदि गौरवीणां गिरां,
स वामन इवाम्बरे हरिणलाञ्छनं वाञ्छति।
लिलङ्घिषति सिंहिकारमणकेसरं फेरुवत्,
पतङ्ग इव पावकं, नृहरिमावकं धावति॥—इति"

—इति सप्तमोल्लासे 'उपपरिसरं गोदावर्याः'—इत्युदाहरणादौ (४४० पृष्ठे)—इति दिक्।

अयं हि मम्मटोऽवगतसर्वशास्त्रहृदयोऽपि मुख्यतया वैयाकरणः, अत एव (२) प्रथमोल्लासे (१० पृष्ठे) 'बुधैर्वैयाकरणैः'—इत्युक्तं मम्मटेनैव। अत एव च द्वितीयोल्लासे (२४ पृष्ठे) "संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा"—इति सूत्रे वैयाकरणसम्मतो जात्यादिरिति पक्षः स्वाभिमतत्वात् प्रथमत एवोपन्यस्तः। किंच दशमोल्लासे (७२९ पृष्ठे) विद्यमानं विरोधालंकारप्रभेदप्रतिपादकं "जातिश्चतुर्भिर्जात्याद्यैः०००"—इति सूत्रमपि जात्यादिरिति पक्ष एव मम्मटाभिप्रेत इत्यत्रानुकूल्यं भजते। अपि च, शब्दव्यापारविचाराख्ये स्वकृतग्रन्थान्तरेऽपि वैयाकरणसम्मतं जात्यादिरिति पक्षमेव युक्तिप्रयुक्तिभिः संस्थाप्य, जातिरेवेति मीमांसकसम्मतं पक्षं मम्मट एव निराकृतवानिति तत्कृतं ग्रन्थान्तरमपि तस्य वैयाकरणत्वं स्पष्टमवगमयतीति बोध्यम्। अत एव च दशमोल्लासे (८२९ पृष्ठे) एकपदप्रतिपाद्यसंकरस्योदाहरणं 'स्पष्टोल्लसत्किरण०००'—

---

१ य इति। देवनाथभट्टाचार्यकृतायां काव्यप्रकाशटीकायां विद्यमानं मम्मटप्रशंसापरं पद्यमिदम्। यः एष. लौकिको मानवः गौरवीणां मम्मटोपाध्यायसम्बन्धिनीनां गिरां काव्यप्रकाशरूपाणां वाचां विपदि विपत्तौ (अनुपपत्तौ) मनः कुरुते चित्तं करोति, सः वामन इव खर्ववत् अम्बरे आकाशे विद्यमानं हरिणलाञ्छनं चन्द्रं वाञ्छति करेणादातुमिच्छति। तथा फेरुवत् जम्बुक इव सिंहिकायाः सिंह्याः रमणो भर्ता (सिंहः) तस्य केसरं स्कन्धलोमावलिं लिलङ्घिषति लङ्घितुमिच्छति। तथा, पतङ्गः कृमिविशेष इव पावकम् अग्निं धावति। तथा, आवकम् अविसमूह इव नृहरिं नरसिंहं धावतीत्यर्थ.॥ २ अत एवेति। वैयाकरणत्वादेवेत्यर्थः। एवमेवात्र प्रघट्टेऽग्रिमाणामप्यर्थो ज्ञेय.॥

इति दत्तम् । यद्ययं मम्मटो नैयायिकः स्यात्तदा नैयायिकैः समस्तस्यास्य पदस्यैक-पदत्वानङ्गीकारात्तदुदाहरणमसंगतं स्यात् । अत एव च मम्मटेन तत्र तत्र वैयाकरणानां पारिभाषिकशब्दैर्व्यवहारः कृतः, यथा, असंगत्यलंकारे ( ७८० पृष्ठे ) "अपवाद-विषयपरिहारेणोत्सर्गस्य व्यवस्थितेः"–इत्यादि । अत एव च "क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना"–( ७१६ पृष्ठे )–इति सूत्रव्याख्यानावसरे प्रदीपकारैरुक्तम्, "वैयाकरणमते क्रियैव हेतुरिति क्रियेत्युक्तम्, वस्तुतस्तु कारणप्रतिषेधेऽपि विभावना"–इति । अत एव च दशमोल्लासे उपमायाः पूर्णालुप्ताविभागो वैयाकरणरीत्या वाक्य-समास-क्यच्क्यङादिप्रत्ययविशेषगोचरतया पञ्चविंशतिविधो व्युत्पादितः । अत एव च तत्रैव ( ६३९ पृष्ठे ) नागोजीभट्टाः, वस्तुतोऽयं पूर्णालुप्ताविभागो वाक्य-समास-प्रत्ययविशेषगोचरतया शब्दशास्त्रव्युत्पत्तिकौशलप्रदर्शनपरत्वादत्र शास्त्रे न व्युत्पाद्यतामर्हति"–इत्याहुरिति विदांकुर्वन्तु विद्वांसः ॥

७. काव्यप्रकाशस्य त्रयोंऽशाः, कारिका वृत्तिरुदाहरणं चेति । कारिकैव सूत्र-नाम्ना व्यपदिश्यते । तत्र सर्वासामपि ( १४२ ) कारिकाणां, परिकरालंकारपर्यन्तायाः वृत्तेः, तत्पर्यन्तस्योदाहरणोपन्यासस्य च कर्ता मम्मट एव । परंतु उदाहरणानि प्रायोऽन्यदीयान्येव गृहीतानि, न तु स्वकृतानि । तानि च वेदव्यासकृतमहाभारत-तत्कृत-विष्णुपुराण कालिदासकृतरघुवंश-तत्कृतकुमारसंभव-तत्कृतमेघदूत-तत्कृतशाकुन्तलनाटक-तत्कृतमालविकाग्निमित्रनाटक-तत्कृतविक्रमोर्वशीयनाटक-माघकृतशिशुपालवध-भारविकृतकिरातार्जुनीय-भर्तृहरिकृतवैराग्यशतक-मयूरकविकृतसूर्यशतक-तत्पुत्रशङ्ककृतकाव्य-राजानकरत्नाकरकविकृतहरविजयकाव्य-भल्लटकविकृतभल्लटशतक-दामोदरगुप्तकृत-कुट्टनीमताख्यकाव्य-भासकविकृतकाव्य-देवीलघुस्तवकाव्य-शङ्कराचार्यकृतामरुशतक-हालकविकृतशालिवाहनसप्तशती-आनन्दवर्धनकृतपञ्चबाणलीला-भट्टिकृतभट्टिकाव्य-भवभूतिकृतमालतीमाधव-तत्कृतवीरचरित-हर्षदेवकृतनागानन्द-तत्कृतरत्नावली-राजशेखरकृत-कर्पूरमञ्जरी-तत्कृतविद्धशालभञ्जिका-तत्कृतबालरामायण-तत्कृतबालभारत-नारायणदीक्षितकृतवेणीसंहार-शूद्रककृतमृच्छकटिक-हनुमन्नाटक-हयग्रीववध-उपाहरणनाटकादिभ्य उद्धृतानि । तदेतत्सर्वं मया तत्तदुदाहरणव्याख्यानावसरे उपलब्धेषु तत्तद्ग्रन्थेष्वन्विष्य तत्र तत्र प्रायशो लिखितमेवेति तत एव द्रष्टव्यम् ।

कानिचिदुदाहरणानि तु तत्तद्ग्रन्थानामनुपलम्भादमुकग्रन्थेषु विद्यमानानीति निश्चेतुं न शक्नुमः । यानि च 'त्वयि दृष्ट एव तस्याः०००' ( ६९७ पृष्ठे ), 'स्वयं च पल्लवाताम्र०००' ( ९८२ पृष्ठे ), 'स्निग्धश्यामलकान्तिलिप्तवियतः०००' ( २१२ पृष्ठे )–इत्यादीन्युदाहरणानि कल्पानीति प्रश्ने, प्राचीनग्रन्थस्थान्येव, न तु स्वकृतानीत्येव वदामः,

यतः काव्यप्रकाशापेक्षया प्राचीनायां प्रतीहारेन्दुराजविरचितायामुद्भटालंकारसारलघुवृत्तावप्युदाहृतानीति । एवं 'कस्त्वंभोः कथयामि०००' ( ६८१ पृष्ठे )—इत्यादीन्यप्युदाहरणानि अभिनवगुप्तकृतध्वन्यालोकलोचनेऽप्युदाहृतानीति बोध्यम् । यानितु 'असिपत्रसहायस्य००० ' ( ७०७ पृष्ठे )—इत्यादीनि व्यतिरेकालंकारोदाहरणानि, तानि मम्मटेन स्वयं कृतानीति तु वयं संभावयामः, तत्त्वतस्तु न विद्म इत्यलमतिविस्तरेण ।

अत्राहुर्विवरणकारा अपि,—" काव्यप्रकाशस्य द्वावंशौ कारिका वृत्तिश्चेति, 'भरतमुनिप्रणीता कारिका या अलंकारसूत्रनाम्ना व्यवह्रियते, मम्मटप्रणीता तु वृत्तिः, सैव काव्यप्रकाशनामभाक् '—इति वङ्गीयानां प्रवादः । स चाविचारविजृम्भित एव, यदि कारिकाकृत् भरतमुनिः स्यात्तदा चतुर्थोल्लासे ( ८६ पृष्ठे ) कारिकया उक्तस्यार्थस्य प्रमाणतया ' उक्तं हि भरतेन '—इत्यादिना भरतोक्तिरुद्धृता न स्यात् । कः खल्वनुन्मत्तस्तदुक्तावेव तदुक्तिं प्रमाणतया उपन्यस्यति । अपि च नाट्यसूत्रकृदेव ( १ ) भरतः प्रसङ्गात् रसादिविषयकाण्यपि सूत्राण्येव प्रणिनाय, न त्वलंकारसूत्राण्यपि । अत एव नाट्याचार्यतयैव तस्य प्रसिद्धिः ( २ ) । अलंकारसूत्रतया प्रसिद्धं द्वयमेवाधिगतमस्माभिः, एकं शौद्धोदनिकृतम्, अपरं वामनकृतम् ( ३ ) । किंतु शौद्धोदनिसूत्रोक्तकाव्यलक्षणविलक्षणं काव्यलक्षणमाविष्कुर्वन् वामनसूत्रं च ( ९२८ पृष्ठे ) दूषयन् मम्मटो नानयोः प्रामाण्यमङ्गीचकार । ततश्च 'वृत्तिकृन्मम्मट एव कारिकामपि प्रणिनाय '—इति पाश्चात्यानां प्रवाद एव साधीयान् । कारिकयाऽनुक्ताया अपि वृत्त्युपदर्शितमालोपमायाः दृष्टान्ततामुद्भावयन्ती " माला तु पूर्ववत् " ( ६९८ पृष्ठे )—इति कारिकैवास्य प्रवादस्य प्रामाण्यं व्यवस्थापयति, एषा हि 'पूर्ववत् '—इत्यनेन मालोपमायाः पूर्वोक्ततां व्यनक्ति, न च मालोपमा कारिकया पूर्वमुक्ता, किंतु वृत्त्यैवेति । अत्रानुकूलानि च बहूनि ग्रन्थकृल्लिखनानि सन्ति । तथा हि, "यत्तु ' येनास्याभ्युदितेन०००० '—इत्यत्र समासोक्तिरनुग्राहिकेति मम्मटभट्टैरुक्तम्, तत्र विचार्यते, अत्र विशेषणमहिम्ना प्रतीयमानः कापुरुषवृत्तान्तः किं प्रस्तुतः, आहोस्विदप्रस्तुतः? आद्ये समासोक्तेर्विषय एव नास्ति, ' परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' ( ६७१ पृष्ठे )—इति समासोक्तेर्लक्षणस्य तैरेवोक्तत्वात् "—इति रसगङ्गाधरः । " प्रथमं कारणं विवक्षुः सावतरणिकां ( ४ ) कारिकामाह, ' अस्य

१ 'य नाट्यवेद वेदेभ्यः सारमादाय ब्रह्मा कृतवान्, यत्सनद्धमभिनय भरतश्चकार '—इति दशरूपकम् १ पृष्ठे ॥ २ '०००००भरतमप्यादिकृतिन नाट्याचार्यं नमस्कुर्मः '—इति नाट्यप्रकाशः ॥ ३ 'अलंकारविद्यायाः सूत्रकारो भगवान् शौद्धोदनिः काव्यस्य स्वरूपमाह । काव्य रसादिमत् वाक्यम् '—इति अलंकारशेखरः । ' ०००० काव्यालंकारसूत्राणां स्वार्थां वृत्तिर्विधीयते '—इति वामनसूत्रवृत्तिः ॥ ४ अवतरणिका तु वृत्तिरूपा, तथाच येनैव वृत्तिरकारि तेनैव कारिकेत्यायाति, वृत्तिकृत्तु मम्मट एवेति सर्वमिद विवरणकारैरेव स्पष्टीकृतम् ॥

कारणमाह शक्तिर्निपुणता '—इति "—इति निदर्शनम् ।'दुरितशान्तये ग्रन्थकृत् संस्तौति, नियतिकृतेति '—इति काव्यप्रदीपव्याख्यानावसरे " ग्रन्थकृत् मम्मटः "—इत्युद्द्योतः । "तच्च 'तददोषौ शब्दार्थौ००००'—इति प्रकाशकारेणोक्तम् "—इति रसप्रदीप इति । किंच "अथ मम्मटाचार्यः स्वकृतकाव्यरूपसूत्रारम्भरचितं स्वस्वरूपसूचकं मङ्गलं स्वीयमनुस्मरन्नाह, ग्रन्थारम्भे इति । अत्र सूत्रकारो वृत्तिकारश्चैक एवेति तत्त्वम्, उक्तं च प्रागस्माभिर्ग्रन्थकारवर्णनायाम् । किंच नायमाचार्यो मानुषः, किंतु वाग्देवतैव, प्रमाणं तु ग्रन्थस्यालौकिकत्वम् "—इति सुधासागरोऽप्यत्रानुकूल इति दिक् ।

सत्यं मम्मट एव कारिकाकृत्, किंतु नासौ सर्वा अभिनवाः कारिकाश्चकार, क्वचिदविकलां क्वचिच्च अंशतो विकलां कृत्वा अन्यकृतिमपि ( तत्तत्कृतिनां नामान्यनुल्लिख्यैव ) स्वकृतावन्तर्भावयामास । तथाहि, रसतरङ्गिण्यां भानुदेवधृतं ' शृङ्गारहास्य०००० ' इति भरतसूत्रं ' रतिर्हासश्च०००० '—इति च तत्सूत्रम्, वामनवृत्तिस्थं ' कर्णावतंसादिपदे०००० '—इति श्लोकं च अविकलमेव ( यथाक्रमं १०० पृष्ठे, ११६ पृष्ठे, १९९ पृष्ठे च ) स्वकृतेः कारिकाया अन्तश्चिक्षेप, ' प्रयान्ति रसरूपताम् '—इत्यन्त्यमंशं ' समाख्यातास्तु नामतः '—इत्यन्यथाकृत्य व्यभिचारिभावविभाजकानि ' निर्वेदग्लानि०००० '—इत्यादीनि ( ११७ पृष्ठे ) भानुदेवधृतानि भरतसूत्राण्यपि जग्राहेति-इत्यपि विवरणकारैः स्पष्टीकृतम् ॥

८. काव्यप्रकाशस्योल्लासाभिधेयाः दश विभागाः । तेच " तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि "—( ८ पृष्ठे )—इत्यर्धकारिकां निर्माय तदनुरोधेनैव प्रणीताः । तथा हि, तत्र प्रथमे उल्लासे मङ्गलाचरणानन्तरं क्रमेण काव्यस्य फलं कारणं " तददोषौ शब्दार्थौ "—इत्यादिना स्वरूपं च निरूपितम् । ततः काव्यभेदस्य जिज्ञासितत्वात् उत्तममध्यमाधमरूप-त्रिविधभेदोऽपि न्यरूपि । ततः " शब्दार्थौ काव्यम् "—इत्युक्तत्वात् शब्दार्थविभागादेरपि जिज्ञासितत्वेन द्वितीये उल्लासे शब्दार्थविभागः, आर्थी व्यञ्जना, वाचकशब्दः, मतभेदेन संकेतितार्थः, *लक्षणा*, *लक्षणामूला व्यञ्जना*, *अभिधामूला व्यञ्जना* च न्यरूपि । ततोऽर्थस्य व्यञ्जकता कथमित्याकाङ्क्षायां तृतीये उल्लासे अर्थस्य व्यञ्जकता न्यरूपि । ततः उत्तमकाव्यप्रभेदाना जिज्ञासितत्वात् चतुर्थे उल्लासे ध्वनिकाव्यप्रभेदाः ( १ ), रसभावादयो निरूपिताः । ततो मध्यमकाव्यप्रभेदानां जिज्ञासितत्वात्

१ तेषां मध्ये एकपञ्चाशत् शुद्धा. भेदा. विद्यार्थिबालकाना सौलभ्याय प्रतापरुद्रेऽपि निरूपिताः, तथा हि, "अत्र ध्वनेर्लक्षणाऽभिधामूलत्वेन अविवक्षितवाच्य-विवक्षितान्यपरवाच्याख्यौ प्रथम द्वौ भेदौ । अविवक्षितवाच्यस्य अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यतया द्विविधस्य वाक्यपदगतत्वेन द्वैविध्ये चातुर्विध्यम् । विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमव्यङ्ग्यासंलक्ष्यक्रमव्यङ्ग्यतया द्वौ भेदौ । संलक्ष्यक्रमव्यङ्ग्ये शब्दशक्तिमूले वस्त्वलंकाररूपतया द्वैविध्ये वाक्यपदगतत्वेन चातुर्विध्यम् । अर्थशक्तिमूले संलक्ष्यक्रमव्यङ्ग्ये

अर्थस्य स्वतःसंभवित्वेन कविप्रौढोक्तिसिद्धत्वेन कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वेन च त्रैविध्यम् । त्रिविधस्यापि वस्त्वलंकाररूपतया द्वैविध्ये षड्विधत्वम् । षड्विधस्यापि व्यङ्ग्यव्यञ्जकतया द्वैविध्ये द्वादशविधत्वम् । द्वादशविधस्यापि प्रबन्धगतत्वेन वाक्यगतत्वेन पदगतत्वेन त्रैविध्ये षट्त्रिंशत्प्रकारोऽर्थशक्तिमूलोऽनुरणनध्वनिः । उभयशक्तिमूलो वाक्यगतत्वेनैकविध एव । एवं संलक्ष्यक्रमव्यङ्ग्यध्वनेरेकचत्वारिंशद्भेदाः । असंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः प्रबन्ध–वाक्य–पद–पदैकदेश–रचना–वर्णगतत्वेन षड्विधः । एवं विवक्षितान्यपरवाच्यध्वनेः सप्तचत्वारिंशद्भेदाः । अविवक्षितवाच्यभेदैश्चतुर्भिः सह ध्वनेः प्रथमं शुद्धा एकपञ्चाशद्भेदाः । अथैतेषां शुद्धानामेकपञ्चाशद्भेदानां नामधेयानि कथ्यन्ते । पदगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिः १ । वाक्यगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिः २ । पदगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः ३ । वाक्यगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः ४ । पदगतशब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः ५ । पदगतशब्दशक्तिमूलसंलक्ष्यक्रमालंकारध्वनिः ६ । वाक्यगतशब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः ७ । वाक्यगतशब्दशक्तिमूलसंलक्ष्यक्रमालंकारध्वनिः ८ । पदगतस्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ९ । पदगतस्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलंकारध्वनिः १० । पदगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः ११ । पदगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः १२ । वाक्यगतस्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः १३ । वाक्यगतस्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलंकारध्वनिः १४ । वाक्यगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः १५ । वाक्यगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः १६ । प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः १७ । प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलंकारध्वनिः १८ । प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः १९ । प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः २० । पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः २१ । पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलंकारध्वनिः २२ । पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः २३ । पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः २४ । वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः २५ । वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलंकारध्वनिः २६ । वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः २७ । वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः २८ । प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः २९ । प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलंकारध्वनिः ३० । प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः ३१ । प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः ३२ । पदगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ३३ । पदगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलंकारध्वनिः ३४ । पदगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः ३५ । पदगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः ३६ । वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ३७ । वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलंकारध्वनिः ३८ । वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः ३९ । वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः ४० । प्रबन्धगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ४१ । प्रबन्धगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलंकारध्वनिः ४२ । प्रबन्धगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः ४३ । प्रबन्धगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः ४४ । प्रबन्धगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ४५ । वाक्यगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ४६ । पदगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ४७ । पदैकदेशगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ४८ । रचनागतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ४९ । वर्णगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ५० । वाक्यगतोभयशक्तिमूलो ध्वनिः ५१ ”–इति ॥

पञ्चमे उल्लासे मध्यमकाव्यप्रभेदाः, प्रसङ्गात् व्यञ्जनावृत्तिसंस्थापनयुक्तयश्च निरूपिताः। ततोऽधमकाव्यप्रभेदजिज्ञासायां षष्ठे उल्लासेऽधमकाव्यप्रभेदयोः स्वरूपं निरूपितम्। ततः काव्यलक्षणे दोषाणां प्रागुपादानात् सप्तमे उल्लासे सप्ततिसंख्याकाः दोषाः निरूपिताः, कुत्रचित् तेषामदोषताऽपि निरूपिता। ततः 'सगुणौ'–इति विशेषणात् गुणनिरूपणस्याकाङ्क्षिततया अष्टमे उल्लासे गुणलक्षणम्, 'गुणालंकारयोर्नास्ति भेदः'–इति वदतां केषांचिन्मतं निराकर्तुम् अलंकारलक्षणम्, माधुर्यौजःप्रसादाख्यास्त्रयो गुणाः, वामनोक्तदशगुणानां स्वोक्तेष्वन्तर्भावश्च निरूपितानि। ततः 'अनलंकृती'–इति विशेषणात् अलंकाराणां जिज्ञासितत्वात्, तत्रापि शब्दस्य प्राथम्यात् काव्यलक्षणे प्रागुपादानाच्च नवमे उल्लासे वक्रोक्त्यादयो रीतिसहिताः षट् शब्दालंकाराः निरूपिताः। ततोऽर्थालंकाराणामुपस्थितत्वात् दशमे उल्लासे उपमादयः एकषष्टिसंख्याकाः अर्थालंकाराः, वामनोक्तानामलंकारदोषाणां स्वोक्तेष्वन्तर्भावश्च निरूपिता इति।

तदेतदाहुर्विस्तरेण सुधासागरे भीमसेना अपि, तथा हि,–

"त्रिभिर्विशेषणैः (१) काव्यं शब्दार्थयुगलं स्मृतम्।
षट्फलोत्पादकं (२) चास्य (३) कारणं त्रिविधं मतम्॥ १॥
स्वयं (४) चापि त्रिधा प्रोक्तं, प्रभेदा बहवो मताः।
शब्दोऽर्थश्च त्रिधा प्रोक्तो वृत्त्या, साऽपि (५) त्रिधा मता॥ २॥
शक्तिरिच्छेश्वरी, या सुप्रसिद्धा लक्षणाऽपि च।
व्यञ्जना तु विदग्धैकवेद्याऽत्र प्रतिपादिता॥ ३॥
षड्विधा लक्षणा चात्र, व्यञ्जना बहुधोदिता।
स्वतः शब्दश्चतुर्धा स्याज्जात्यादिः सर्वसम्मतः॥ ४॥
प्रभुसम्मित इत्यादिशब्दोऽत्र कथितस्त्रिधा।
नागरादि पदं चापि त्रिधाऽत्रैव प्रदर्शितम्॥ ५॥
परिवृत्तिसहः शब्दः परिवृत्त्यसहस्तथा।
विभावो द्विविधश्चात्रानुभावा बहुधा मताः॥ ६॥
संचारिणस्त्रयस्त्रिंशद्रसस्तु नवधा स्मृतः।
रत्यादयः स्थायिभावास्तावन्तोऽष्टौ तु सात्त्विकाः॥ ७॥
भावोऽथ भावाभासश्च बहुधा समुदाहृतः।
भावस्य शान्तिरुदयः संधिः शबलता तथा॥ ८॥

१ अदोषौ, सगुणौ, सालंकाराविति विशेषणैरित्यर्थः॥ २ "काव्यं यशसेऽर्थकृते"–इत्यादिना दर्शितानि षट् फलानि॥ ३ काव्यस्य॥ ४ काव्यम्॥ ५ वृत्तिरपि॥

श्रुतिकट्वादयो दोषाः पदस्योक्ता हि षोडश ।
क्लिष्टादित्रितयं तत्र समस्तस्यैव, नान्यथा ॥ ९ ॥
अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।
वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥ १० ॥
प्रतिकूलवर्णमुख्या वाक्य एवैकविंशतिः ।
अर्थदोषाः ह्यपुष्टाद्यास्त्रयोविंशतिसंख्यकाः ॥ ११ ॥
रसदोषा दश प्रोक्ताः, सर्वदोषास्तु सप्ततिः ।
माधुर्यौजःप्रसादाख्यास्त्रय एव गुणा मताः ॥ १२ ॥
दिव्यादिभेदात्प्रकृतिः षड्विशद्धा प्रकीर्तिता ॥
वैदर्भीप्रमुखा रीतिस्त्रिधाऽत्रापि प्रदर्शिता ॥ १३ ॥
शब्दालंकृतयः षट् च वक्रोक्त्याद्या उदाहृताः ।
अर्थालंकृतयस्त्वेकषष्टिसंख्याः प्रकीर्तिताः ॥ १४ ॥"

—इति ॥

या हि पञ्चमोल्लासे संस्थापिता व्यञ्जनाख्या वृत्तिः सा श्रीमदानन्दवर्धनाचार्यस्यैवोपज्ञाविषया, वामन—वाग्भट—दण्डि—भोजदेवादिनिबन्धेषु प्राचीनेषु अस्या अनुपलम्भात्, आनन्दवर्धनकृतग्रन्थ एवोपलम्भाच्च । आनन्दवर्धनेन हि व्यञ्जनां स्थापयितुमेव ध्वन्याख्यं कारिकाग्रन्थं निर्माय, आलोकाख्या तद्व्याख्याऽप्यकारि । तदुपरि अभिनवगुप्ताचार्येण लोचनाख्या व्याख्यापि कृता । स एव विशिष्टो निबन्धो ध्वन्यालोकलोचननामा सर्वत्र सुप्रसिद्धः । अनन्तरं च गतवति कियति काले तामेवानन्दवर्धनोद्भावितां व्यञ्जनामनुमानेऽन्तर्भावयन् महिमभट्टो व्यक्तिविवेकाख्यं ग्रन्थं कृतवान् । तदुक्तं सरस्वतीतीर्थप्रभृतिकृतासु काव्यप्रकाशटीकासु पञ्चमोल्लासे, "यथा चाह व्यक्तिविवेककारो महिमभट्टः, 'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम् । व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥'—इति"—इति । तदेतन्महिमभट्टमतं खण्डयन् मम्मटः प्रसङ्गाद्भट्टलोल्लटादिमीमांसकादिमतमपि खण्डयित्वा पञ्चमोल्लासे व्यञ्जनां स्थापयामास । अत एव बहवो हि टीकाकाराः 'तथा निःशेषच्युतेत्यादौ गमकतया ००००'—इति मम्मटग्रन्थस्य (२८४ पृष्ठे) "ध्वनिकारोक्तोदाहरणेऽनुमानं निरस्य, स्वोक्तोदाहरणेऽपि तन्निराकुर्वन् स्वोक्तं ध्वनिलक्ष्यं समर्थयति"—इत्यवतरणिकामाहुः । उक्तं च पञ्चमोल्लाससमाप्त्यवसरे काव्यप्रकाशदर्पणे विश्वनाथेनाऽपि,—"इति काव्यपुरुषावतारस्य निखिलशास्त्रतत्त्ववेदिनः श्रीमदानन्दवर्धनाचार्यस्य पृथग्व्यञ्जनाव्यापारस्थापनमिति सर्वमवदातम्"—इति । तदेतत्सर्वं मम टीकायां २७९ पृष्ठादारभ्य पञ्चमोल्लाससमाप्तिपर्यन्तं स्पष्टीकृतमिति दिक् ॥

९ अलंकारनिबन्धकर्तारो बहवो हि जाताः, यथा, भामह-रुद्रट-भट्टोद्भट-वाभट-वामन-दण्डि-शौद्धोदनि-मुकुल-प्रतीहारेन्दुराज-आनन्दवर्धन-अभिनवगुप्त-भोजराज-महिमभट्ट-पीयूषवर्ष-अप्पय्यदीक्षित-विश्वनाथ-गोविन्दठक्कुर-जगन्नाथ-केशवमिश्र-विद्यानाथप्रभृतयः। तत्र भामहस्तु यस्य ग्रन्थस्य विवरणं भट्टोद्भटेन कृतं तस्य कर्ता। उक्तं चोद्भटालंकारसारलघुवृत्तौ प्रथमवर्गे प्रतीहारेन्दुराजेन "स्पष्टमिदं भामहविवरणे भट्टोद्भटेन"—इति। अथ हि भामहः परमप्राचीनः, अत एवोक्तं प्रतापरुद्रे विद्यानाथेन "पूर्वेभ्यो भामहादिभ्यः सादरं विहिताञ्जलिः। वक्ष्ये सम्यगलंकारशास्त्रसर्वस्वसंग्रहम्॥"—इति। अत एव च मम्मटोऽपि षष्ठोल्लासे (२८८ पृष्ठे) "रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितः"—इत्यादिभामहग्रन्थं स्वोक्तेऽर्थे सम्मत्यर्थमङ्गीकृतवान्। रूपकादिरित्यादिग्रन्थो भामहकृत इत्यत्र प्रमाणं तु तत्रैव मम टीकायां द्रष्टव्यम्। रुद्रटस्तु रुद्रटालंकार—(काव्यालंकार)त्वेन प्रसिद्धो यो निबन्धस्तत्कर्ता। भट्टोद्भटस्तु कुमारसंभवाख्यकाव्यस्यालंकारग्रन्थस्य च कर्तेति ज्ञायते। अत एव तत्र तत्र (७१३ पृष्ठे, ७०९ पृष्ठे च) मया प्राचीनटीकास्थं तथैव लिखितम्। उद्भटकृतालंकारग्रन्थस्तु अलंकारसर्वस्वाख्य एवेत्यनुमीयते, अत एव "योऽलंकारो यदाश्रितः" (८३१ पृष्ठे)—इति काव्यप्रकाशीयग्रन्थस्य "अलंकारसर्वस्वकारीयामुपपत्तिं दूषयति योऽलंकार इति"—इति चक्रवर्त्यादिकृतटीकास्थमवतरणवाक्यम्, "उद्भटाचार्यमतेऽप्येवमेवेति दर्शयति योऽलंकार इति"—इति श्रीवत्सलाञ्छनादिकृतटीकास्थमवतरणवाक्यं चैकरूपतां प्राप्नोति। श्रीवत्सलाञ्छनः खलु क्वचित्क्वचिदविकलां क्वचित्क्वचिदङ्गविकलां कृत्वा चक्रवर्तिकृतटीकामेव स्वकृततया दर्शयामासेति। अत एव च यदेकत्रैकेन टीकाकारेण भट्टोद्भट इति नाम निर्दिश्यते, तत्रैवापरेण उद्भट इति, परेण चोद्भटभट्ट इति, अन्येन चोद्भटाचार्य इति, इतरेण चालंकारसर्वस्वकार इति च नाम निर्दिश्यते इति विचारयन्तु विवेकिनः। वाभटस्तु वाभटालंकारत्वेन प्रसिद्धो यो निबन्धस्तत्कर्ता, स च ग्रन्थोऽद्यनेन प्रसिद्धिमुपगतः सर्वत्र वर्वर्ति। वाभटमेव वाग्भट्ट इति नाम्ना केचित्क्वचिद्व्यवहरन्ति। वामनस्तु अलंकारसूत्रतद्वृत्त्योश्च कर्ता। अस्या च वामनसूत्रवृत्तौ तृतीयाधिकरणे द्वितीयाध्याये मृच्छकटिककर्तुः शूद्रकस्य कवेर्नाम समुपलभ्यते, दृश्यते च "दृष्ट्वैकासनसंगते प्रियतमे"—इत्याद्यमरुशतकपद्यम्। एवं चायं वामनो नवीन एव, यतः शारीरकभाष्यादिकर्ता पञ्चचत्वारिंशदधिकाष्टशतीमिते (८४९) विक्रमार्कसंवति (१) काल्पीनामकग्रामे (जिल्हा कडपा) द्रविडकुले शिवगुरुशर्मणो भार्यायां लब्धजन्मा शंकराचार्यः परकायप्रवेशविद्यया कस्यचिन्मृतस्यामरुनाम्नो राज्ञः शरीरं प्रविश्य अमरुशतकं काव्यं चकारेति जनप्रसिद्धम्। उक्तं चामरुशतकटीका

1 इद यज्ञेश्वरपण्डितकृतादार्यविद्यासुधाकराल्लभ्यते॥

कुर्वता गुर्जरदेशीयेन रानेरपुरवासिना पुरोहितोपनाम्ना देवशंकरेणापि "क्व मे मन्दा बुद्धिः क्व च रसमयं शंकरवचस्तथाऽपि व्याख्यातुं तरलमनसः शंकरकृतिम्"—इति। दण्डी तु काव्यादर्श-दशकुमारचरित-छन्दोविचित्ति-मल्लिकामारुतादिग्रन्थकर्ता। शौद्धोदनिस्तु जैनोऽलंकारसूत्रकर्ता। मुकुलस्तु अभिधामातृकाख्यग्रन्थकर्ता प्रतीहारेन्दुराजस्य गुरुः। तदुक्तमुद्भटालंकारसारलघुवृत्तौ प्रतीहारेन्दुराजेन "विद्वदग्र्यान्मुकुलकादधिगम्य विविच्यते। प्रतीहारेन्दुराजेन काव्यालंकारसंग्रहः॥"—इति। इयं हि प्रतीहारेन्दुराजकृता लघुवृत्तिः षड्वर्गात्मिकाऽस्माभिः सर्वांशेन दृष्टा। अत्र च दण्डिवामनादीनां नामानि, अमरुशतकपद्यानि च दृश्यन्ते। इमौ मुकुलप्रतीहारेन्दुराजौ काश्मीरकौ। ये प्रागुक्ताः भट्टलोल्लट-श्रीशङ्कुक-भट्टनायकास्त्रयस्ते तु भरतमुनिप्रणीतनाट्यसूत्रस्य (क्रमेण मीमांसा-न्याय-सांख्यरीत्या) व्याख्यातार इति प्राचीनटीकास्थमस्माभिश्चतुर्थोल्लासे (८६ पृष्ठे) निरूपितमेव। तत्र श्रीशङ्कुकस्तु "दुर्वाराः स्मरमार्गणाः"—(७९० पृष्ठे) इति पद्यस्य कर्ता सूर्यशतककर्तुर्मयूरकवेः पुत्र इति केचित्कल्पयन्ति। आनन्दवर्धनस्तु ध्वनिग्रन्थस्य आलोकाख्यतद्वृत्तेश्च कर्ता। अभिनवगुप्तस्तु भरतमुनिप्रणीतसूत्रस्य व्याख्यायाः, आनन्दवर्धनकृतध्वन्यालोकस्य लोचनाख्यव्याख्यायाश्च नाट्यलोचनस्य च शैवशास्त्रस्य च कर्ता। अस्येतिवृत्तं यथोपलब्धं चतुर्थोल्लासे (९६ पृष्ठे) अस्माभिर्दर्शितम्। भोजराजस्तु सरस्वतीकण्ठाभरण-रामायणचम्पू-शृङ्गारप्रकाशादिकर्ता (१) मालवदेशे धारानगरीमधिवसतिस्म। महिमभट्टस्तु व्यक्तिविवेककर्तेति स्पष्टीकृतमेव (२८०।२८२ पृष्ठे)। पीयूषवर्षस्तु चन्द्रालोककर्तेति वदन्ति। अप्पय्यदीक्षितस्तु चित्रमीमांसा-कुवलयानन्द-वृत्तिवार्तिकानामलंकारग्रन्थानां विधिरसायणमिति पूर्वमीमांसाग्रन्थस्य रत्नत्रयपरीक्षादीनामद्वैतग्रन्थानां च कर्ता शिवकाञ्चीवास्तव्यो द्रविडकुलोद्भवः। अनेन हि अप्पदीक्षितेन स्वकृतसिद्धान्तलेशाख्यग्रन्थसमाप्तावेवं लिखितम्,—"विद्वद्गुरोर्विश्वजिदध्वरस्य श्रीसर्वतोमुखमहाजितयाजिसूनोः। श्रीरङ्गराजमखिनः श्रितचन्द्रमौलिरस्त्यप्पदीक्षित इति प्रथितस्तनूजः॥ तन्त्राण्यधीत्य सकलानि सदावदातव्याख्यानकौशलकलाविशदीकृतानि। आस्थाय मूलमनुरुध्य च संप्रदायं सिद्धान्तभेदलवसंग्रहमित्यकार्षीत्॥"—इति। विश्वनाथस्येतिवृत्तं तु (१७ प्रघट्टे) स्फुटीभविष्यति। गोविन्दठक्कुरस्यापि (२२ प्रघट्टे) स्फुटीभविष्यति। जगन्नाथस्तु तैलङ्गजनपदाभिजनो वाराणसीवास्तव्यो लक्ष्मीगर्भजः पितुः पेरुभट्टादधिगतनानाविधविद्याप्रपञ्चो रसगङ्गाधरादिग्रन्थानां कुचमर्दनाख्यव्याकरणग्रन्थस्य (२) च कर्ता। तदुक्तं रसगङ्गाधरस्य प्रारम्भे स्वेनैव, "पाषाणादपि पीयूषं स्यन्दते यस्य लीलया। तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं

---

१ द्रष्टव्यमिदं ममटीकायां ३८१ पृष्ठे॥ २ कुचमर्दनाख्यग्रन्थस्तु भट्टोजीदीक्षितकृतप्रौढमनोरमाख्यग्रन्थस्य खण्डनरूपः। स च कारकप्रकरणान्तोऽद्यापि मन्निकटे वर्तते॥

महागुरुम् ॥ श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् । देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्वविद्याधरो यः (१) ॥"–इति । किंचायं जगन्नाथः पीयूषलहरी-(गङ्गालहरी)-सुधालहरी-अमृतलहरी-करुणालहरी-लक्ष्मीलहरी-यमुनावर्णनचम्पू-अश्वधाटी-प्राणाभरण-जगदाभरण-असफविलास-भामिनीविलासादीनां ग्रन्थानां कर्ता कदाचिन्मथुरायां निवसन् कदाचित् हस्तिनापुर्यामपि (दिल्ल्यामपि) निवसन् पण्डितराजपदाभिधेयत्वं कविराजपदाभिधेयत्वं चानुभवन् संवत् १६७६-१७१६ (खृस्त १६२०-१६६०) पर्यन्ते काले आसीदित्यादि विस्तरेण भामिनीविलासटिप्पणकर्त्रा स्पष्टीकृतमिति तत एव द्रष्टव्यम् । केशवमिश्रस्तु उत्तरदेशीयोऽलंकारशेखरकर्ता । विद्यानाथस्तु तैलङ्गदेशीयः प्रतापरुद्रस्य कर्तेति तत्तद्ग्रन्थावलोकनेनावधार्यते इत्यलमधिकप्रसङ्गेन ॥

१० अलंकारनिबन्धानां रचनाप्रणाल्योऽपि विविधाः । वामनसूत्रादौ दोषगुणालंकाराः क्रमेण निरूपिताः । काव्यादर्शादौ प्रथमं गुणः ततोऽलंकारः ततश्च दोष इति, (किंतु सर्वत्रैव प्रथमं काव्यलक्षणमभ्यधायि)।

एवं काव्यलक्षणेऽपि परस्परं मतद्वैधं विद्यते, गुणालंकारयुक्तौ शब्दार्थौ काव्यमिति वामनमतम् । अदोषावित्यधिकविशेषणयुक्तौ तौ काव्यमिति मम्मटमतम् । एवमेव प्रभाकरमतम् । निर्दोषं गुणालंकाररसवत् वाक्यं काव्यमिति भोजमतम् । गुणालंकाररीतिरसोपेतः साधुशब्दार्थसंदर्भः काव्यमिति वाभटमतम् । निर्दोषं गुणालंकारलक्षणरीतिवृत्तिमत् वाक्यं काव्यमिति पीयूषवर्षमतम् । रसादिमद्वाक्यं काव्यमिति शौद्धोदनिमतम् । एवमेव विश्वनाथादिमतम् । इष्टार्थोपेता पदावली काव्यमिति दण्डिमतम् । रमणीयार्थप्रतिपादकः शब्दः काव्यमिति जगन्नाथमतम् । ध्वन्यात्मकं वाक्यं काव्यमिति महिमभट्टमतम् । रसालंकारयुक्तं सुखविशेषसाधनं वा काव्यमिति केशवमिश्रमतम् । एवमन्यमतेऽप्यन्यविधमिति विवरणकारैः स्पष्टीकृतम् ॥

११ प्राचीनानां वामनवाभटदण्डिभोजदेवादीनां निबन्धाः अतीव प्रसन्नाः प्रायः सूक्ष्मविचारविहीनाश्च, स्थूलतः प्रकृतविषयप्रतिपादनार्थमेव हि ते प्रवृत्ता इति तेषां निर्विवाद एवोत्कर्षः । जगन्नाथस्य नवीनोऽपि रसगङ्गाधरः उत्कृष्टः, तत्र नैकोऽपि विषयः प्रायो निर्युक्तिकः उक्तः, प्रत्युत सर्व एव ते अतीव सूक्ष्मानुसंधानेन निर्णीताः, नापि च रचनायाः काठिन्यम्, यच्च क्वापि क्वाऽपि काठिन्यं दृश्यते, तत् प्रतिपाद्यविषयाणां

---

१ ज्ञानेन्द्राख्ययतेः सकाशादित्यर्थः । देवादेव । एवं प्रसिद्धौ । खण्डदेवादेवेत्यर्थः । शेष इत्यङ्क उपनाम यस्य तस्माद्वीरेश्वरपण्डितात्प्राप्ता शेषस्य पतञ्जलेरमला भणितिर्महाभाष्यरूपा येन तादृश इति रसगङ्गाधरटीकायां मर्मप्रकाशाख्यायां नागोजीभट्टाः ॥

दोषः, न ग्रन्थकर्तुः ।–इत्येव वहवो गुणाः विद्यन्ते, केवलमेको दोषः, यदनेकत्र नैयायिकसमयानुसारितर्केण दूषणभूषणादिकरणमिति । अयं हि युक्त्या स्वोक्तिमुपपादयतां सूक्ष्मं च विषयमाविष्कुर्वतां मम्मटोपाध्यायानां काव्यप्रकाशाख्यो निवन्धः सर्वांशे नितरामुत्कर्षमाश्रयते, परंत्वत्रायमेको महान् दोषः, यत् कस्यचित्कस्यचिदंशस्य (१) अभिप्रायो दुरधिगम इति, यं कृतधियोऽपि कतिनस्तत्त्वतोऽधिगन्तुं न शक्नुवन्ति । किं पुनरधिकम्, एकेन यदंशस्य (२) योऽभिप्रायोऽवधारि, अन्येन तदंशस्यैव तद्विपरीत इति । अत एवास्य टीकाः बह्व्यः संवृत्ताः । उक्तं च महेश्वरभट्टाचार्येण "काव्यप्रकाशस्य कृता गृहे गृहे टीका, तथाऽप्येष तथैव दुर्गमः"–इति । उक्तं च कमलाकरभट्टैरपि "काव्यप्रकाशे टिप्पण्यः सहस्रं सन्ति यद्यपि"–इति । नरसिंहठक्कुरेणाप्युक्तम्, "नानाविधं वहुविधैर्विवुधैर्निवद्धं व्याख्यानमत्र न तथा मुदमातनोति"–इति । भीमसेनेनाप्युक्तम्, "व्याख्यातं हि पुराऽत्र यैः, सुकवयः सर्वे महापण्डितास्ते वन्द्याः सुतरां, न तेषु मम कोऽप्यस्त्याग्रहः स्पर्धितुम्"–इति । अत एवास्मदवलोकितासु काव्यप्रकाशटीकासु वहूनि काव्यप्रकाशटीकानामान्युपलभ्यन्ते, तान्यपि सर्वाणि अस्माभिः पद्यैर्निवद्धान्येवेति तत एव द्रष्टव्यानि ।

१२ अस्मदुपलब्धाः काव्यप्रकाशटीकाः कृतवतामयं कालक्रम इति संभाव्यते, प्रथमतो माणिक्यचन्द्रः, ततः सरस्वतीतीर्थः, ततो जयन्तभट्टः, ततः सोमेश्वरः, ततो विश्वनाथः, ततश्चक्रवर्ती, तत आनन्दकविः, ततो महेश्वरः, ततः श्रीवत्सलाञ्छनः, ततः प्रदीपकारः, ततः कमलाकरभट्टः, ततो नरसिंहठक्कुरः, ततो वैद्यनाथः, ततो भीमसेनः, ततो नागोजीभट्टः, ततो महेशचन्द्र इति । तथा हि,–

१३ तत्र माणिक्यचन्द्रकृतायां संकेताख्यटीकायां न कस्याश्चिदपि टीकायाः, टीकाकारस्य वा नाम समुपलभ्यते, किंतु अभिधामातृकाकर्तुर्मुकुलस्य सरस्वतीकण्ठाभरणकर्तुर्भोजराजस्यैव च नाम "तदुक्तं मुकुलेन"–इत्यादिना "तदुक्तं श्रीभोजराजेन"–इत्यादिना च दृश्यते, अत एवास्माभिर्निश्चीयते 'अयं माणिक्यचन्द्रः काव्यप्रकाशटीकाकारेषु प्रथमः'–इति । अयं हि जैनो गुर्जरदेशीयः विक्रमार्कसमयात् षोडशाधिकद्वादशशतीमिते (१२१६) [खृस्त ११६०] संवत्सरे आसीत् । तदेतत्सर्वमुक्तं माणिक्यचन्द्रेणैव स्वकृतटीकायाः समाप्तौ । तथाहि, "इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशसंकेते काव्यप्रकाशदशमोल्लाससंकेतः समाप्तः ।

गुणानपेक्षिणी यस्मिन्नर्थालंकारतत्परा ।
प्रौढाऽपि जायते वुद्धिः संकेतः सोऽयमद्भुतः ॥ १ ॥

---

१ 'अनयोर्लक्ष्यस्य लक्षकस्य च' (३९ पृष्ठे)–इत्यादेः ॥ २ श्लेषविचारादेः (५८५ पृष्ठे) ॥

नानाग्रन्थसमुद्धृतैरसकलैरप्येकसंसूचितः
संकेतोऽर्थलवैर्लविष्यति नृणां शङ्कं विशङ्कं तमः।
निष्पन्ना न तु जीर्णशीर्णवसनैर्नीरन्ध्रविच्छित्तिभिः
प्रालेयं प्रथिता नु मन्थति कथं कन्थाऽन्यथा सर्वथा ॥ २ ॥
श्रीशीलभद्रसूरीणां पट्टे माणिक्यसन्निभाः।
परमज्योतिषो जाता भरतेश्वरसूरयः ॥ ३ ॥
भरतेन परित्यक्तोऽस्मीति कोपं वहन्निव।
शान्तो रसस्तदधिकं भेजे श्रीभरतेश्वरम् ॥ ४ ॥
पदं तदन्वलंचक्रे खेरस्वामिमुनीश्वरः।
अनुप्रद्योतनोद्द्योतं दिवमिन्दुमरीचिवत् ॥ ५ ॥
वाञ्छन् सिद्धिवधूं, हसन् सितरुचिं कीर्त्या, रतिं रोदयन्
पञ्चेषोर्मथनात्, दहन् भववनं, क्रामन् कषायद्विपः।
त्रस्यन् रागमलङ्घनाद्घनशरुद्भ्रस्त्रास्त्यजन् योषितो,
बिभ्राणः शममद्भुतं, नवरसीं यस्तुल्यमस्फोरयत् ॥ ६ ॥
पट्टतर्कीललनाविलासवसतिः, स्फूर्जत्तपोहर्पति-
स्तत्पादोदयचन्द्रमाः समजनि श्रीनेमिचन्द्रप्रभुः।
निःसामान्यगुणैर्भुवि प्रसृमरैः प्रालेयशैलोज्ज्वलै-
र्यश्चक्रे कणभोजिनो मुनिपतेर्व्यर्थं मतं सर्वतः ॥ ७ ॥
यत्र = = = शालिनामपि नृणां संचारमातन्वतां
संदेहैः प्रतिभाकिरीटपटली सद्यः समुत्तार्यते।
नीरन्ध्रं विषमप्रमेयविटपिव्रातावकीर्णे सदा
तस्मिंस्तर्कपथे यथेष्टगमना जज्ञे यदीया मतिः ॥ ८ ॥
यस्मात्प्राप्य पृथुप्रसादविशदां विद्योपदेशात्मिकां
पत्रीं मुक्तिकरीमतीव जडता वस्त्वन्विता मन्मतिः।
विक्षिप्य भ्रमशौल्किकात् कलयतो लब्धाश्रयं मानसे
मध्ये वाङ्मयपत्तन प्रविशति द्वारि स्थितास्तत्क्षणात् ॥ ९ ॥
मदमदनतुषारक्षेपपूषा विभूषा-
जिनवदनसरोजावासि वागीश्वरायाः।
द्युमुखमखिलतर्कग्रन्थपङ्केरुहाणां
तदनु समजनि श्रीसागरेन्दुर्मुनीन्द्रः ॥ १० ॥

माणिक्यचन्द्राचार्येण तदङ्घ्रिकमलालिना ।
काव्यप्रकाशसंकेतः स्वान्योपकृतये कृतः ॥ ११ ॥
रसवक्त्रग्रहाधीशवत्सरे *( १२१६ ) मासि माधवे ।
काव्ये काव्यप्रकाशस्य संकेतोऽयं समर्थितः ॥ १२ ॥"

—इति ।

यत्तूक्तमार्यविद्यासुधाकरे ( २२६ पृष्ठे ) यज्ञेश्वरपण्डितेन, "विक्रमार्कसमयात् पश्चाशदधिकैकादशशतीमिते संवत्सरे ( ११५० ) गुर्जराधिपो जयसिंहनामा बभूव, तदानी श्रीपत्तनेऽधिवसतो देवसूरिनामकजैनाचार्यस्य शिष्यो माणिक्यनामा कश्चित् पण्डितः आसीदिति मेरुतुङ्गाचार्यकृतप्रबन्धचिन्तामणिग्रन्थाल्लभ्यते । स च माणिक्यपण्डितः स्वकृतायां काव्यप्रकाशग्रन्थस्य संकेताभिधटीकायां द्वितीयोल्लासे लक्षणावृत्तिनिरूपणप्रसङ्गे यदाह कुमारिलः "निरूढालक्षणाः काश्चित् सामर्थ्यादभिधानवत्"—इत्यादिना कुमारिलभट्टाचार्यस्य मतं स्वख्यातेऽर्थे प्रमाणत्वेनोपन्यस्तवान्"—इति । तत्तु चिन्त्यमेव, प्रागुक्तमाणिक्यचन्द्रोक्तिविरोधात्, प्रबन्धचिन्तामणिग्रन्थभृतो माणिक्यचन्द्रस्त्वन्य एवेति कल्पनेन प्रबन्धचिन्तामणिग्रन्थविरोधाभावाच्चेति विद्वद्भिराकलनीयम् ॥

१४ एवं सरस्वतीतीर्थकृतायां बालचित्तानुरञ्जन्याख्यटीकायामपि न कस्यचिट्टीकाकारस्य मतं दूषणाय भूषणाय वा समुपन्यस्तम्, किंतु अष्टमोल्लासे ( ५४१ पृष्ठे ) "राजा भोजो गुणानाह विंशतिं चतुरश्च यान् । वामनो दश तान्, वाग्मी भट्टस्त्रीनेव भामहः"—इत्युक्तम् । अतोऽयं सरस्वतीतीर्थोऽपि प्राचीन एव । अस्य देशकालादिकं सर्वं स्वकृतटीकायामादौ स्वेनैव वर्णितम् । तथा हि,

"ढुण्ढिसंज्ञमभिनौमि सिद्धिदं०००० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥
विधातुकामः सुकृतं गरीयः, क्षमातलं स्वर्ग इवावतीर्णः ।
आलम्बनं सर्वविशेषणानां, जयत्यखण्डस्थितिरान्ध्रदेशः ॥ ५ ॥

फलमिव सुकृतानां लोकधात्र्याः समग्रं,
विगलितमिव भूमौ नाकलोकस्य खण्डम् ।
नगरमतिगरीयः सर्वसंसारसारः,
त्रिभुवनगिरिनाम्ना * तत्र विख्यातमास्ते ॥ ६ ॥

तत्राभवत्सकलशास्त्रविचारपात्रं, श्रीवत्सगोत्रसुरकाननपारिजातः ।
अन्याद्विधातुरवलम्बनमाप्तवाचां, रामेश्वरः कलिकलङ्ककथान्तरायः ॥ ७ ॥

---

* वत्सरे इति। विक्रमस्येति शेषः । जैनानामुत्तरदेशीयानां च विक्रमसंवत्सरलेखनस्यैव सुप्रसिद्धत्वात्॥

* त्रिभुवनगिरिनामकं नगरं काल्पीग्रामप्रान्ते ( कडपाजिल्हाख्ये ) अस्तीति श्रूयते ॥

आसीत्प्रमाणपदवाक्यविचारशीलः साहित्यसूक्तिबिसिनीकलराजहंसः ।
ब्रह्मामृतग्रहणनाटितलोभवृत्तिस्तस्यात्मजो निपुणधीर्नरसिंहभट्टः ॥ ८ ॥
तस्मादचिन्त्यमहिमा महनीयकीर्तिः श्रीमल्लिनाथ इति (१) मान्यगुणो बभूव ।
यः सोमयागविधिना कलिखण्डनाभिरद्वैतसिद्धमिव सत्ययुगं चकार ॥ ९ ॥
लक्ष्मीरिव मुरारातेः, पुरारातेरिवाम्बिका ।
तस्य धर्मवधूरासीन्नागम्मेति गुणोज्ज्वला ॥ १० ॥
ज्येष्ठस्तदीयतनयो विनयोदितश्रीर्नारायणोऽभवदशेषनरेन्द्रमान्यः ।
वाग्देवताकमलयोरपि यस्य गात्रे सीमाविवादकलहो न कदाऽपि शान्तः ॥११॥
विरिञ्चेः पर्यायो, भुवि सदवतारः फणिपतेः (२),
त्रिदोषो दोषाणां, सकलगुणमाणिक्यजलधिः ।
अवाचां प्राचां वा सकलविदुषां मौलिकुसुमं,
कनीयांस्तत्सूनुर्जयति नयशाली नरहरिः ॥ १२ ॥
सवसुग्रहहस्तेन ब्रह्मणा (३) समलंकृते (१२९८) [ खृस्त १२४२ ] ।
काले (४) नरहरेर्जन्म कस्य नासीन्मनोरमम् ॥ १३ ॥
तत्काले (५) सह मङ्गलेन गुरुणा मित्रेण लेभे वणिग्-
राशिस्तु प्रमदाश्रयेण समभूदुच्चैः सकाव्यो बुधः ।
सत्केतुः शुभहेतवे द्विजपतिर्जातः कुलीरागतो,
मैत्रः शान्तिमयं दधार कलशं जन्मोत्सवाडम्बरे ॥ १४ ॥
विचार्य सर्वं सुखमेव दुःखं, सुधामये ब्रह्मणि लोलुपस्य ।
सन्न्यस्यतस्तस्य बभूव सार्थो सरस्वतीतीर्थ इति प्रसिद्धिः ॥ १५ ॥
तर्के कर्कशकेलिना, बलवता वेदान्तविद्यारसे,
मीमांसागुणमांसलेन, परितः सांख्येऽप्यसंख्योक्तिना ।

---

१ अयं मल्लिनाथो रघुकाव्यादिटीकाकृन्मल्लिनाथ एवेति न मन्तव्यम्, तस्य काश्यपगोत्रत्वात्, तद्वंशजा गजेन्द्रगडाख्यनगर्यामद्याप्यधिवसन्ति ॥ २ फणिपतेः शेषस्य, शेषावतारस्य महाभाष्यकर्तुः, पतञ्जलेरिति यावत् ॥ ३ ब्रह्मेत्येकसंख्याया संज्ञा, "एकमेवाद्वितीयं ब्रह्म"–इति श्रुतेः ॥ ४ काले इति । विक्रमस्येति भावः, वाराणस्यामद्यापि विक्रमसंवत्सरलेखनस्यैव प्रसिद्धत्वात् ॥ ५ तत्काले इति । गुरुणा बृहस्पतिना । मित्रेण रविणा । वणिग्राशिः तुलाराशिः । प्रमदाश्रयेण कन्याश्रयेण । सकाव्यः सशुक्रः । सत्केतुः विद्यमानकेतुः । द्विजपतिः चन्द्रः । कुलीरागतः कर्कराशिगतः । मैत्रः मित्रस्य सूर्यस्यापत्यं पुमान् शनिः । कलशः कुम्भराशिम् । नन्वत्र स्वजन्मकालस्थग्रहाणां स्थानप्रदर्शनप्रसङ्गे राहोः स्थानप्रदर्शनं कुतो न कृतमिति चेत्, शृणु, केतोः स्थानप्रदर्शने राहोस्तत्सप्तमराशिनियतस्थितिकत्वेन मकररूपस्थानस्य प्रदर्शितप्रायत्वात् । तथा चोक्तं मुहूर्तमालायाम्, "तमः शिखी द्वौ तु सदैव वक्रिणौ, तथा, मिथः सप्तमराशिचारिणौ"–इति ॥

साहित्यामृतसागरेण, फणिनो व्याख्यासु विख्यावता,
काश्यां तेन महाशयेन किमपि ब्रह्मामृतं पीयते ॥ १६ ॥
काश्यां सरस्वतीतीर्थयतिना तेन रच्यते ।
टीका काव्यप्रकाशस्य बालचित्तानुरञ्जनी ॥ १७ ॥ "—इति ।

वर्णितं च सरस्वतीतीर्थेनैव स्वकृतटीकायाः समाप्तावपि, तथा हि,

" पञ्च क्लेशानजैषुर्जगति सुकृतिनो दुश्चरैर्ये तपोभि-
र्येषां चेतोऽरविन्दे स किल पुरहरो वासमङ्गीचकार ।
येषां पादारविन्दे स्मृतिरपि जडताहारिणी देहभाजां,
तैष्टीकेयं सरस्वत्युपपदविलसत्तीर्थसंज्ञैरकारि ॥ १ ॥
साहित्यकुमुदकाननिद्राविद्राणयामिनीनाथाः ।
काव्यप्रकाशटीकां व्यरचंस्ते सरस्वतीतीर्थाः ॥ २ ॥
एवं सरस्वतीतीर्थयतिना तेन निर्मिता ।
टीका काव्यप्रकाशस्य मुदे स्याद्विदुषां चिरम् ॥ ३ ॥

इति श्रीसरस्वतीतीर्थविरचितायां काव्यप्रकाशटीकायां दशमोऽर्थालंकारनिर्णय उल्लासः ॥ "—इति ।

अनेन हि सरस्वतीतीर्थेन स्मृतिदर्पणाख्यो धर्मशास्त्रग्रन्थोऽपि विरचितः, यतोऽत्रत्यानि इमानि पद्यानि प्रायः स्मृतिदर्पणेऽपि दृश्यन्ते । एवमनेन तर्करत्नाख्यो मूलग्रन्थः, तर्करत्नदीपिकाख्यस्तट्टीकाग्रन्थश्च निर्मितः । अत एव पञ्चमोल्लासे श्रुतिलिङ्गवाक्येतिकाव्यप्रकाशीयग्रन्थव्याख्यानावसरे स्वेनैवोक्तम्, " श्रुतिलिङ्गादीनां लक्षणानि अस्माभिस्तर्करत्नप्रकरणे प्रदर्शितानि, एतेषामुदाहरणानि तर्करत्नदीपिकायां प्रदर्शितानि "—इति ॥

१९ तथा, जयन्तभट्टकृतायां दीपिकाख्यटीकायामपि क्वचित्क्वचिन्मुकुलस्यैव नाम दृश्यते, नान्यस्य । अस्य जयन्तभट्टस्योदन्तस्तु स्वकृतदीपिकाख्यटीकाया अवसाने स्वयमेव लिखितः । तथा हि,—

" संवत् १३५० वर्षे ज्येष्ठवदि ३ रवौ अद्येह आशापल्लीसमावासितश्रीमद्विजयकटके सकलारातिभूपालमौलिमुकुटालंकारभूषितपादपङ्कजमहाराजाधिराजश्रीसारङ्गदेवकल्याणविजयराज्ये साहित्यविद्याविसिनीविकासनैकभास्करस्य सकलालंकारविवेकचतुरमानसमानसराजहंसस्य षड्दर्शनपारावारपोतायमानावान्तरप्रतिभानिमज्जनैकमहापोतस्य निखिलपुराणपुराणीकृतमार्गेतरविद्वज्जनमनोऽज्ञानमहान्धकारसंहारसहस्रकरस्य श्रुतिस्मृतिमहार्थनिर्भ्रान्तविभ्रान्तविद्वज्जनमनोऽज्ञानतिमिरपरिहारचन्द्रोदयस्य श्रीमद्गुर्जरमण्डलेशमुकुटालंकारप्रभापरिचुम्बनबहुलीकृतचरणनखकिरणस्य महामात्यपुरोहितश्रीमद्भरद्वा-

जस्याङ्गभुवा पुरोहितश्रीजयन्तभट्टेन सकलसुधीजनमनोऽज्ञानतिमिरविनाशकारणं विरचितेयं काव्यप्रकाशदीपिका।

श्रीमद्भरद्वाजपदाम्बुजीयप्रसादतो ग्रन्थरहस्यमेतत्।
विज्ञाय किंचित् कृतवान् जयन्तस्तत्र प्रमाणं सुधियां वितर्कः॥ १॥

काव्यप्रकाशदीपिका समाप्ता॥"–इति॥

१६ तथैव, सोमेश्वरकृतायां संकेतापरनाम्नि काव्यादर्शाभिधटीकायामपि न कस्यचिदपि काव्यप्रकाशटीकाकारस्य नामोपलभ्यते, अपि तु भट्टनायकः, भट्टतौतः, भट्टमुकुलः, भामहः, रुद्रटः–इत्यादीनि प्राचीनमूलग्रन्थकाराणामेव नामानि दृश्यन्ते। अस्य च सोमेश्वरस्येतिवृत्तं न किंचिदपि आसादितमस्माभिः, किंतु अयं सोमेश्वरः कान्यकुब्जदेशीय इत्येव तर्कयामः, यतः सोमेश्वरेण स्वकृतटीकायां सप्तमोल्लासे 'वेपव्यवहारादिकम्'–(५०० पृष्ठे)–इति प्रतीके कान्यकुब्जदेशो निर्दिष्ट इति। तथा हि, "वेपव्यवहारादीति देशादिभिः प्रत्येकं संबध्यते, तेन, देशवेपव्यवहाराकारवचनानामौचित्यान्निबन्धः कार्य इत्यर्थः, यथा, कान्यकुब्जदेशे उद्धतो वेपो, दारुणो व्यवहारो, भयंकर आकारः, परुपं वचनमनुचितम्, म्लेच्छेपु तदेवोचितम्"–इति। नन्वेतावतैवायं सोमेश्वरः कान्यकुब्जदेशीय एवेति निर्णेतुं न शक्यम्, कान्यकुब्जदेशस्य सौष्ठवादिवर्णनार्थमेव तथोक्तिरित्यपि कल्पयितु शक्यत्वादिति चेत्, मैवम्, स्वदेशतदीयपदार्थानामेव पुरस्करणे ग्रन्थकारशैलीसिद्धत्वात्। अत एव नागोजीभट्टाः 'भूयो भूयः सविधनगरीरथ्यया' (२०३ पृष्ठे)–इति पद्यव्याख्यानावसरे "वलभी छज्जा–इति प्रसिद्धम्"–इति हिन्दुस्थानभापया व्याचख्युः। किंच 'स्तोकेनोन्नतिमायाति' (५८३ पृष्ठे)–इत्युदाहरणे तुलापदव्याख्यानावसरे 'कांटा'–इति प्रसिद्धमित्याहुर्नागोजीभट्टा एव। अत एव चामरकोशटीकाकारो महेश्वरः पर्कटीशब्दव्याख्यानावसरे "अयं गोमान्तकभापया केळा इति ख्यातस्य"–इति व्याख्यातवान्। न चायमपि गोमान्तकदेशीय इत्यत्र न दृढतरं प्रमाणमिति शङ्क्यम्, "गोमान्तकप्रान्तजुपा श्रीमहेश्वरशर्मणा"–इति तेनैवोपोद्घाते वर्णितत्वात्।

अनेन हि सोमेश्वरेण स्वकृतटीकायाः समाप्तावपि नाधिकं किंचिल्लिखितम्, किंतु,

"भरद्वाजकुलोत्तंसभट्टदेवकसूनुना।
सोमेश्वरेण रचितः काव्यादर्शः सुमेधसा॥ १॥

संपूर्णश्च काव्यादर्शो नाम काव्यप्रकाशसकेत इति शुभम्"–इत्येव लिखितम्॥

१७ विश्वनाथकृते काव्यप्रकाशदर्पणे तु चण्डीदासः, वाचस्पतिमिश्रः, श्रीधरसांधिविग्रहकः–इत्यादीनि काव्यप्रकाशटीकाकाराणां नामान्युपलभ्यन्ते। अयं हि विश्वनाथः

साहित्यदर्पणकर्तैव, अत एवोक्तं तेनैव स्वकृतटीकायां द्वितीयोल्लासे लक्षणानिरूपणप्रसङ्गे "एषां च षोडशानां लक्षणाभेदानामिह दर्शितान्युदाहरणानि मम साहित्यदर्पणेऽवगन्तव्यानि"– इति। उक्तं च दशमोल्लासेऽनुमानालंकारेऽपि, "तदुक्तं मत्कृते साहित्यदर्पणे"– इति। अयं हि चन्द्रशेखरकवेः पुत्रः, अत एव साहित्यदर्पणे उक्तम्, "श्रीचन्द्रशेखरमहाकविचन्द्रसूनुश्रीविश्वनाथकविराजकृतं प्रबन्धम्। साहित्यदर्पणममुं सुधियो विलोक्य"– इति। अयं हि नारायणदासस्य पौत्रः, तदप्युक्तं तेनैव रसप्रकरणे "यदाहुः श्रीकलिङ्गभूमण्डलाखण्डलमहाराजाधिराजश्रीनरसिंहदेवसभायां धर्मदत्तं स्थगयन्तः सकलसहृदयगोष्ठीगरिष्ठकविपण्डितास्मत्पितामहश्रीमन्नारायणदासपादाः"–इति। अयं हि काव्यप्रकाशटीकाकर्तुश्चण्डीदासस्यानुबन्धी। तदप्युक्तं रसप्रकरणे तेनैव, "इहास्मत्पितामहानुजकविपण्डितमुख्यचण्डीदासपादैरुक्तम्"–इति। अयं हि उत्कलब्राह्मणः, अत एवोक्तं पञ्चमोल्लासे 'कुरुरुचिमिति पदयोर्वैपरीत्ये'–इति प्रतीके (२६१ पृष्ठे) "वैपरीत्यं रुचिङ्कुर्विति पाठः, अत्र चिङ्कुपदं काश्मीरादिभाषायामश्लीलार्थबोधकम्, उत्कलादिभाषायां धृतवांडकद्रव* इत्यादि"–इति। अनेन हि विश्वनाथेन नरसिंहविजयाख्यं काव्यमपि कृतम्, तदुक्तं तेनैव पञ्चमोल्लासे 'कष्टत्वादीनामनित्यदोषत्वम्'– इति प्रतीके (२६१ पृष्ठे), "यथा मम नरसिंहविजये "स्फुटविकटचपेटापातनेनायमष्टौ सपदि कुलगिरीन्वा खण्डशश्चूर्णयामि। प्रलयमरुदुदारस्फीत○○○○"–इत्यादि"–इति। अनेन हि चन्द्रकलाख्या नाटिकाऽप्यकारीति गम्यते, तदप्युक्तं तेनैवाष्टमोल्लासे, "तत्र मसृणवर्णनिर्वाहो यथा मम चन्द्रकलायां नाटिकायाम्"–इति। अनेन विश्वनाथेन स्ववृत्तं स्वकृतटीकायामारम्भे स्वल्पमेव लिखितम्, तथा हि,

"प्रमातृप्रमाणप्रमेयप्रपञ्चप्रसूतिं प्रमिण्वन्ति यां योगिवर्याः।
गिरां देवतां दैवतं देवतानां प्रबोधं प्रदेयादियं मत्प्रबन्धे॥ १॥
टीका काव्यप्रकाशस्य दुर्बोधानुप्रबोधिनी।
क्रियते कविराजेन विश्वनाथेन धीमता॥ २॥
इह सर्वग्रहग्रस्ताः कुर्वन्ति कुधियो मुदा।
न दोषः, किंतु तत्रापि विचिन्वन्तु गतिं चिरात्॥ ३॥"–इति।

स्वकृतटीकायाः समाप्तौ तु,–

"लक्ष्मीर्वक्षो मुरारेस्त्विति (१) कवगयतेर्भोगमालाङ्गमौने
मौनिं सिन्धुः स्वराणामधिवसति विधेर्भाविता यावदस्य।

---

१ अन्तिमपत्रमतिशिथिलमशुद्धं चासीदिति यथोपलब्धं तथैव मया लिखितम्॥

द्वितीयो गुणः, शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते ।

---

ठक्कुरादयः । **विशेषेति** । सजातीयाद्व्यावर्तनं विशेषः तस्याधानं प्रत्ययस्तस्य हेतुरित्यर्थः । जातेः प्राणप्रदत्वे वृद्धसंमतिमाह **उक्तं हीति** । वाक्यपदीयं नाम भर्तृहरिकृतो व्याकरणग्रन्थविशेषः । **गौः** गोपदोद्देश्यो धर्मी, **स्वरूपेण** जातिरहितव्यक्तित्वमात्रेणेत्यर्थ इति टीकाकाराः, अज्ञातगोत्वकेन धर्मिस्वरूपमात्रेणेत्यर्थ इत्युद्द्योतकाराः, **न गौः** न गौरितिव्यवहारविषयः, अन्यथा घटोपि गौः स्यात्स्वरूपाविशेषादिति भावः । **नाप्यगौः** नाप्यगौरितिव्यवहारविषयः, तथा सति गौरप्यगौः स्यादिति भावः । अगौरित्यत्र "गोरतद्धितलुकि" इति टच् प्रत्ययो न भवति "नञस्तत्पुरुषात्" इति निषेधात् । **गोत्वाभिसंबन्धादिति** । गोत्वज्ञानादित्यर्थः । गोत्वसमवायादित्यर्थ इति नरसिंहठक्कुराः । एवं च यावद्गोव्यवहारं तत्र गोपिण्डे गोत्वस्य सत्त्वात् प्राणप्रदत्वमिति भावः । **गौः** गौरितिव्यवहारविषयः । एवं च 'नित्यमेकमनेकानुगतं (१) सामान्यम्' (जातिः)' इति जातिलक्षणमिति बोध्यम् ।

**द्वितीयः** विशेषाधानहेतुः । शुक्लादेर्गुणस्य विशेषाधानहेतुत्वं कथयति **शुक्लादिना हीति** । अस्य 'विशिष्यते' इत्यनेनान्वयः । **लब्धसत्ताकं** जात्या प्राप्तव्यवहारयोग्यताकम्, **वस्तु** व्यक्तिः, **विशिष्यते** सजातीयाद्व्यावर्त्यते । अत्र लब्धेत्यतीतनिर्देशेनोत्पन्नस्य द्रव्यस्य पश्चाद्गुणेन योग इति दर्शितम्, एवं चोत्पन्नस्य द्रव्यस्य क्षणमेकं निर्गुणत्वं जातियुक्तद्रव्यस्यैवोत्पत्तिः, 'जन्मना जायते जातिः' इत्यभियुक्तोक्तेः, अतो जातिगुणयोर्महान् भेद इति बहवः; प्रदीपकारास्तु यद्यपि शुक्लादिगुणस्य नित्यत्वाभ्युपगमे गोत्वादिना समकालमेव संबन्धित्वं तथापि शुक्लादिगुणस्य संबन्धः कदाचित् (२) अपैत्यपि न तु गोत्वादेरिति जातिगुणयोर्भेद इत्याहुः । एवं च "सत्त्वे निविशतेऽपैति, पृथग् जातिषु दृश्यते । आधेयश्चाक्रियाजश्च, सोऽसत्त्वप्रकृतिर्गुणः ॥"— इति गुणलक्षणं बोध्यम् । अस्यार्थः, द्रव्यमाश्रयते, तत एव च द्रव्यान्निवर्तते, भिन्नजातीयेषु द्रव्येषु दृश्यते, यः स गुणः । एतेन जातेर्गुणत्वं निवारितम् । सा हि द्रव्ये निविशमाना द्रव्यं न कदाचिज्जहाति । न च भिन्नजातीयानि द्रव्याण्यभिनिविशते । यद्यपि गवाश्वादिषु प्राणित्वमस्ति, तथापि प्राणित्वेन तेषामेकजातीयत्वमेव । ननु क्रियायाः पूर्वोक्तलक्षणयोगाद्गुणत्वं प्राप्नोति, सापि हि द्रव्ये निविशते, कदाचिद् द्रव्यान्निवर्तते, निष्क्रियं हि द्रव्यं कदाचिद्भवति, कदाचित्सक्रियम्, भिन्नजातीयानि च द्रव्याण्याश्रयतीत्याह **आधेय इति** । उत्पाद्य इत्यर्थः, यथा घटादेः पाकजो रूपादिः । अक्रियाजोऽनुत्पाद्यः, यथाऽऽकाशादेर्महत्त्वादिः । क्रियातूत्पाद्यैव न

---

१ अनेकानुगतम् अनेकसमवेतम् ॥ २ पाकाद्यवस्थायाम् । आदिशब्देन रञ्जनावस्थाया ग्रहणम्, पाकेन रञ्जनेन च वर्णान्तरकरणे इत्यर्थः ॥

साध्यः पूर्वापरीभूतावयवः क्रियारूपः । डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन सन्निवेश्यते

---

नित्येति तस्याः द्वैविध्याभावाद्गुणत्वाभावः । ननु एवं द्रव्यस्यापि गुणत्वं प्राप्नोति, अवयविद्रव्यमवयवद्रव्येषु निविशते, असमवायिकारणसंयोगनिवृत्तौ च विनाशात्ततोऽपैति, भिन्नजातीयेषु च हस्तपादादिषु दृश्यते, द्विविधं तन्नित्यानित्यभेदेन, निरवयवस्य द्रव्यस्यात्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्यानित्यत्वादित्यत आह असत्त्वप्रकृतिरिति । अद्रव्यस्वभाव इत्यर्थः । अत्र पृथग्जातिष्वित्यसमासः, समासे हि "जात्यन्ताच्छ बन्धुनि"—इति छः प्रसज्येत । तत्र व्यक्तिषु जात्याधारेषु दृश्यमानो जातिषु दृश्यते इत्युच्यते । स्पष्टमिदं सर्वम् "वोतो गुणवचनात्"(४ । १ । ४४) इति पाणिनिसूत्रे भाष्यकैयटयोः ।

साध्यस्य लक्षणमाह साध्य इत्यादिना । साध्यः साध्यत्वेन विवक्षितः । तदेव दर्शयति पूर्वापरीभूतेति । पूर्वापरीभूताः क्रमिका अवयवा एकदेशा (अधिश्रयणादयोऽवतारणान्ताः) यस्य सः, बौद्धोऽधिश्रयणाद्यवतारणान्तव्यापारसमूहो हि पाकक्रिया, विक्लित्त्यनुकूलत्वेन तेषामनुगमान्न नानार्थता, तत्र सर्वप्रागभावे भविष्यत्त्वम्, सर्वध्वंसे भूतत्वम्, कस्यचिद्वर्तमानत्वे वर्तमानत्वम्, एवं च भासमानपौर्वापर्यकावयवकत्वमसमानाधिकरणो धर्मविशेषः साध्यत्वमिति फलितम् (१)। क्रियारूप इति । धातुवाच्य इति यावत्, तथा च पचादीना क्रियायां शक्तिः । यदुक्तं वाक्यपदीये "यावत्सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते" इति (२)। अस्यार्थः, सिद्धं भूतं तथा असिद्धं भावि वा यावत् व्यापारवृन्दं साध्यत्वेनाकारेण पचतीत्याद्याख्यं तावत् प्रतीयते सा क्रियेत्यभिधीयते कथ्यते इत्यन्वयः । सिद्धमसिद्धं वेत्यत्र हेतुराश्रितेति (३)। आश्रितं क्रमरूपं येन तत्त्वादिति ।

वक्तृयदृच्छेत्यादिना उक्तं चतुर्थमुपाधिं विशदयति डित्थादीति । डित्थादिशब्दानां डित्थडपित्थादिसंज्ञाशब्दानां (प्रथमादिवर्णबुद्ध्या क्रमशः अल्पावयवावच्छेदेन चक्षुःसन्निकर्षे पटस्येव किंचित्किंचिदभिव्यक्तम्) अन्त्यो यो वर्णस्तद्बुद्ध्या निर्ग्राह्यं निःशेषतो ग्राह्यमित्यर्थः, पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतयाऽन्त्यवर्णबुद्ध्या 'सर्वावयवावच्छेदेन चक्षुःसन्निकर्षे संपूर्णपटस्येव' स्फुटतरमभिव्यक्तमिति यावत्. संहृतक्रमं संहृतः शून्यः क्रमो वर्णक्रमो यस्य तत्, वर्णक्रमशून्यमित्यर्थः, यथा पटप्रत्यक्षे न तन्तुक्रमभानं तद्वत् वर्णक्रमग्रहशून्यमिति यावत् । स्वरूपमिति । स्फोटाख्यशब्दस्वरूपमित्यर्थः एकः पट इतिवदेकं पदमिति व्यवहारात्स्फोटाख्यः स्वीक्रियते इति भावः (४) । वक्त्रा पालकादिना । यदृच्छयेति । डित्थादिपदं डित्थादिनामभिः [illegible]

---

१ तत्र—लितम्—उद्द्योत. ॥ २ यावत्सिद्ध—इति—प्रदीप ॥ ३ सिद्ध—तेति—प्रभा ॥ ४ एकः—भा—इति [illegible] ॥

**इति सोऽयं संज्ञारूपो यदृच्छात्मक इति । 'गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति महाभाष्यकारः । परमाण्वादीनां तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम् । गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद्भेद इव लक्ष्यते यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात् ।**

---

बोधकं भवत्वित्याकारया स्वेच्छयेत्यर्थः । उपाधित्वेन विशेषणतया नामतया वा **सन्निवेश्यते** स्थाप्यते कल्प्यते वेत्यर्थः । इति शब्दो हेतौ । द्वितीय इतिशब्दस्तु जात्यादिविभागपरिसमाप्तिद्योतकः । यदृच्छाकल्पितत्वाद् यदृच्छाशब्द इति व्यवहारस्तदाह **यदृच्छात्मक इति** । यदृच्छया स्वेच्छया आत्मा स्वरूपं यस्य तादृश इत्यर्थः, अयमेव संज्ञाशब्दो द्रव्यशब्द इति च व्यवह्रियते; श्रावणज्ञानस्य शाब्दबोधे हेतुत्वाङ्गीकाराच्च नात्माश्रयदोष इति बोध्यम् (१) ।

केचित्तु, अन्त्यं व्यवच्छेद्यम्, तच्च स्वलक्षणं धर्मिस्वरूपं बुद्ध्या तद्द्वारा निर्ग्राह्यं निःशेषतो ग्राह्यं यस्य (शब्दरूपस्य) तादृशम्, शब्दज्ञानेन धर्मिप्रत्यायनादिति भावः; **संहृतक्रमं** जातिप्रतीत्यनन्तरं आक्षेपादिना व्यक्तिप्रतीतिरिति गवादिपदे यः क्रमः तच्छून्यम्, आहत्यैव धर्मिप्रत्यायनादिति भावः; **डित्थादिशब्दानां** डित्थादीनां शब्दानां **स्वरूपम्** आनुपूर्वी इत्यन्वयः; ननु गवादिपदे जात्यादिवत् इह संज्ञाया एवोपाधित्वात्कथमेतदत आह **उपाधित्वेनेति** । पदार्थोपस्थित्यनुकूलत्वेनेत्यर्थः, तथा च पदार्थविशेषणत्वरूपमुपाधित्वं न संज्ञाया इति भावः, **सन्निवेश्यते** संकेत्यते, केवले धर्मिण्येवेति शेषः, उपाध्यन्तरं तेषां नास्ति, किंतु धर्मिमात्रं ततः प्रतीयते, पदान्निर्विकल्पकं तु आकाशपदादाविष्टमेव, अत एवास्य द्रव्यशब्दत्वेन व्यवहार इति वृत्त्यर्थ इत्याहुः । तच्च महाभाष्यविरुद्धम्, महाभाष्ये शब्दस्यैवोपाधित्वेन व्यवस्थापनात्, डित्थादिशब्दात् डित्थनामाऽयमिति प्रतीतेश्च । किं चात्र पक्षेऽन्त्येत्यादि व्यर्थम्, सर्वेषामेव शब्दानां स्वज्ञानद्वाराऽर्थज्ञानजनकत्वात्, अर्थज्ञानानन्तरमेव स्वरूपतो बोधाच्च, अन्त्यशब्दस्य प्रागुक्तेऽर्थे शक्त्यभावाच्च । अपि च बहुव्रीहौ बुद्धिनिर्ग्राह्यान्त्यकमिति स्यात्, विशेषणत्वात् । किंचोपाधित्वेनेत्यसमञ्जसम्, सर्वेषामेव शब्दानां तथात्वेनास्य वैलक्षण्यानापत्तेर्लक्षणापत्तेश्चेति दिक् ।

एतदेवं प्राणप्रदो जातिः, विशेषाधानहेतुर्गुणः, साध्यः क्रिया, यदृच्छाशब्दो डित्थादिरिति चतुर्धा उपाधिरुक्तस्तत्र संमतिमाह **गौः शुक्ल इति** । **चतुष्टयीति** । शब्दानामर्थे या प्रवृत्तिः सा प्रवृत्तिनिमित्तभेदात्प्रकारचतुष्टयवतीत्यर्थः । यद्वा, प्रवृत्तिरित्यस्य नामैकदेशे नामग्रहणमिति न्यायेन प्रवृत्तिनिमित्तमित्यर्थः, प्रवृत्तिनिमित्तत्वं च यज्ज्ञानाच्छब्दप्रवृत्ति-

१ अयमेव—बोध्यम्—उद्द्यो० ॥

हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिस्तत् शुक्लत्वादि सामान्यम्, गुडतण्डुलादिपाकादिष्वेवमेव पाकत्वादि, बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च, प्र-

---

स्तत्त्वम्; तथा च, शब्दानां प्रवृत्तिनिमित्तं चतुर्विधमित्यर्थः; एवं च उपाधेः (विशेषणस्य) चातुर्विध्यात् शब्दस्यापि चातुर्विध्यमिति भावः। प्रवृत्तिरितीत्यस्य "ऋलृक्" सूत्रे उवाचेति शेषः। **महाभाष्यकारः** पतञ्जलिः। ननूक्तरीत्या परमाणुत्वस्य प्राणमदत्त्वेन जातितया परमाण्वादिशब्दानामपि जातिशब्दतया कथं गुणशब्दत्वेन व्यवहार इत्यत आह **परमाण्वादीनामिति**। आदिना परममहच्छब्दसंग्रहः, जातिशब्दा एव ते, वैशेषिकनयानुसारेण तु गुणशब्दव्यवहारः, स च भाक्त इति भावः। ननु पटादिनिष्ठानां शुक्लत्वादिगुणानां गुडतण्डुलादिनिष्ठानां (१) पाकादिक्रियाणां च प्रतिधर्मिवैधर्म्यदर्शनात् (२) नानात्वेन तत्र शक्तौ व्यक्तिपक्षवदानन्त्यव्यभिचारयोर्दोषयोरापात इत्यत आह **गुणक्रियेति**। **वस्तुतः** स्वरूपतः। **भेद इवेति**। स एवायमिति प्रत्यभिज्ञया शुक्लादीनामैक्यसिद्धौ भेदप्रतीतिराश्रयभेदौपाधिकी, तत्संबन्धस्यैव च नाशोत्पादाविति भावः (३)। एकस्योपाधिवशादनेकत्वप्रतीतौ दृष्टान्तमाह **यथैकस्येति**। **मुकुरो** दर्पणः, **आलम्बनं** प्रतिबिम्बाश्रयः। **भेदादिति**। 'भेद इव लक्ष्यते' इत्यनुपज्यते। यथा हि कृपाणमुकुरतैलादीनां प्रतिबिम्बाश्रयाणां भेदादेकमेव मुखं खड्गे दीर्घं, मुकुरे अणुमहद्रूपं, तैले स्निग्धमिति एवंरीत्या नानाकारत्वेन भासते, तथैव शुक्लादिव्यक्तिरेकैव शङ्खाद्याश्रयवशान्नानात्वेन स्फुरतीत्यर्थः॥

एवं 'जात्यादिर्जातिरेव वा' इतिसूत्रोक्तं जात्यादिरितिपक्षं व्याख्याय 'जातिरेव वा' इतिपक्षं व्याचष्टे **हिमेति**। हिमपयःशङ्खादय आश्रयाः येषामिति बहुव्रीहिः। **परमार्थत इति**। वस्तुत इत्यर्थः। **भिन्नेष्विति** इदं शुक्लं शुक्लतरं शुक्लतममित्यादिप्रतीतेः, पाकाच्छुक्लं रूपं नष्टं श्याममुत्पन्नमिति अबाधिततारतम्यप्रतीतेश्चेति भावः। न चेयं भ्रान्तिः, बाधाभावादित्याशयः। **शुक्लादिषु** गुणेषु। **अभिन्नेति**। अभिधानं शब्दव्यवहारः, प्रत्ययो ज्ञानम्, अभिन्नौ एकाकारौ यौ अभिधानप्रत्ययौ तयोरुत्पत्तिरित्यर्थः, केचित्तु अभिन्नमेकं यत् अभिधानं शब्दस्तेन या ज्ञानोत्पत्तिरित्याहुः। **सामान्यमिति**। जातिरित्यर्थः, अस्तीत्यग्रिमेणान्वयः। अतस्तत्रैव संकेत इति शेषः। **एवमेवेति**। क्रियाशब्देष्वपि गुडतण्डुलादिद्रव्याश्रिता ये पाकादयोऽन्योन्यमन्यत्वेन स्थिताः क्रियाविशेषा-

---

१ गुडतण्डुलादिनिष्ठानामिति। तन्निष्ठविक्लित्तीनां भेदे तदनुकूलव्यापाराणामपि भेद इति भावः। कारणभेदस्य कार्यभेदनियामकत्वादित्याशयः॥ २ वैधर्म्यदर्शनात् भेददर्शनात्॥ ३ शुक्लादीना— भाव — उद्द्योतः॥

**तिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये । तद्वान् अपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात् प्रकृतानुपयोगाच्च न दर्शितम् ।**

---

स्तत्समवेतं सामान्यमस्ति तद्वशेनायं पाकोऽयं पाक इत्यभिन्नाभिधानप्रत्ययोत्पत्तिरित्यर्थः। **पाकत्वादीति** । सामान्यमिति शेषः । अस्तीत्यग्रिमेणान्वयः । तारत्वमन्द्रत्वादिना शब्दे नानात्वं प्रदर्शयितुमाह **बालेत्यादि** । **डित्थादिशब्देषु** यदृच्छाशब्देषु । चकारः पूर्वोक्तसमुच्चयार्थकः । एवं शब्दगता जातिरितिमते शब्दे नानात्वं प्रदर्श्य अर्थगता जातिरितिमते अर्थे नानात्वं प्रदर्शयितुमाह **प्रतिक्षणं भिद्यमानेष्विति** । प्रतिक्षणं भिन्नेषु पिण्डेषु स्वाभाविकं डित्थत्वं सामान्यमित्यर्थः, अत्र पक्षे क्षणरूपविशेषभेदाद्भेदः, यद्वा, क्षणोऽत्र बालयौवनाद्यवस्थाकालः, तत्र वृद्धिह्रासदर्शनेन धर्मिभेदस्वीकारात् । वस्तुतस्तु क्षणपदं लवमुहूर्तादिपरम्, कालभेदे स्थौल्यकृशत्वाद्युपलब्धेर्भेदसिद्धिरिति बोध्यम् । डित्थत्वादिजातेरनेकव्यक्तिवृत्तित्वोपपादनाय व्यक्तिभेदप्रदर्शनम् । वाशब्दः शब्दार्थगतजात्योर्वादिभेदेन विकल्पार्थः । केचित्तु वाशब्द इवार्थे 'वा स्याद्विकल्पोपमयोः' इति कोशात्, शब्देष्वित्यनन्तरं योज्यः, शब्देष्विव भिद्यमानेष्वर्थेष्वित्यन्वय इत्याहुः । जातिरेवेतिपक्षमुपसंहरति **इतीति** । **प्रवृत्तिनिमित्तं** संकेतविषयः । **अन्ये** मीमांसकाः । ननु महाभाष्यकारमते उपाधावेव शक्तिः, मीमांसकमते जातावेव शक्तिस्तदा कथं व्यक्तिभानमितिचेत्, न, जात्या व्यक्तिराक्षिप्यते इति ग्रन्थेन तद्भानस्य वक्ष्यमाणत्वात् । ननु मतान्तराणामपि सत्त्वात्तानि कुतो नोपन्यस्तानीत्यत आह **तद्वानिति** । व्यक्तिविशेषमनुपादाय तद्वान् सामान्यतो जातिमान् शब्दार्थ इति नैयायिकमतम्; एतच्च प्रदीपे तट्टीकायां च विस्तरेण प्रतिपादितम्, तथाहि, न व्यक्तिमात्रं शक्यं न वा जातिमात्रम्, आद्ये आनन्त्याद्व्यभिचाराच्च, अन्त्ये व्यक्तिप्रतीत्यभावप्रसङ्गात्, न चाक्षेपाद्व्यक्तिप्रतीतिरिति वाच्यम्, तथा सति वृत्त्याऽनुपस्थितत्वेन शाब्दबोधविषयत्वानुपपत्तिः, तस्माज्जातिविशिष्टे एव संकेत इति । **अपोह इति** । गोशब्दश्रवणात्सर्वासां गोव्यक्तीनामुपस्थितेरतस्मादश्वादितो व्यावृत्तिदर्शनाच्च अतद्व्यावृत्तिरूपोऽपोहो वाच्य इति बौद्धमतम् । अयं भावः, जातेर्विचारासहत्वात्, व्यक्तौ तु क्षणिकत्वेन संकेतस्य कर्तुमशक्यत्वात् गवादिशब्दानामगवादिव्यावृत्तिरूपोऽपोहोऽर्थ इति । ननु गोज्ञानात् गवि प्रवृत्तिवत् अश्वेऽपि निवृत्तेरानुभाविकत्वात्स कथं नोक्त इत्यत आह **ग्रन्थेत्यादि** । **गौरवं** बाहुल्यम् । ननु प्रयोजनसद्भावे गौरवमप्यङ्गीकार्यमित्यत आह **प्रकृतेति** । मतद्वयोपन्यासेनैव संकेतितसाकल्यप्रतीतेर्मतान्तरोपन्यासो व्यर्थ इत्यर्थ इति केचित्, अन्ये तु तर्हि जात्यादयोऽपि न वक्तव्या इत्यत आह **प्रकृ-**

स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥ ८ ॥

स इति साक्षात्संकेतितः, अस्येति शब्दस्य ॥

---

तेति । उपाधिशक्तिवादे उपाधेयस्य (१) व्यङ्ग्यत्वसंभवात्तन्मतानुवादः प्रकृतोपयोगी, उपहितशक्तिस्तु प्रतिकूलप्रायेति न तदनुवाद इति भाव इत्याहुः । न दर्शितमिति । न साधकबाधकदर्शनेन प्रदर्शितमित्यर्थः । अत्र 'इति महाभाष्यकारः' 'इत्यन्ये' 'इति केचित्' इत्यादिभिः पदैः सर्वस्मिन्नपि पक्षेऽस्वरसोद्भावनम्, तद्बीजं तु भट्टमते च जातेरेव शक्यत्वे गोपदात् गोव्यक्तिभानानुपपत्तिः, व्यक्तिजात्योः सामानाधिकरण्याभावाद्व्याप्तेरभावेनाक्षेपासंभवात्, तादात्म्यसंबन्धेन व्याप्तेरभ्युपगमेऽपि व्यक्तेरपदार्थत्वे विभक्त्यर्थसंख्याकर्मत्वादेर्व्यक्तावनन्वयः, सुविभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः; प्रकृतितात्पर्यविषये तदन्वयव्युत्पत्तौ लक्षणाद्युच्छेदः, शक्तिग्राहकानयनादिव्यवहारस्य जातिविषयत्वाभावश्च; गुरुमतेऽपि व्यक्तिं विना जातेरग्रहेण व्यक्तेरपि शक्तिग्रहविषयतया तद्विषयत्वाविशेषाज्जातिमात्रविषयत्वस्य कारणतावच्छेदकत्वे विनिगमनाविरहः (२), न्यायादिमतेऽपि जात्यादेः शक्तिविषयत्वे गौरवम्, तस्माद्व्यक्तिपक्ष एव क्षोदक्षमः (३) इति नरसिंहठक्कुरः । वस्तुतस्तु महाभाष्यकारोक्तपक्ष एव ग्रन्थकृदभिप्रेत, अत एव दशमोल्लासे विरोधालंकारे सूत्रं "जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्यात् गुणस्त्रिभिः । क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश" इति वयं ब्रूमः ॥

वाचकशब्दमभिधाय लाक्षणिकं विवक्षन् तद्द्वययुक्तलक्षणोपयोगित्वेन मुख्यार्थमाह स इति । स साक्षात्संकेतितः अर्थः मुख्यः मुख्य इत्युच्यते इत्यर्थः । "नाभिधा समयाभावात्" इत्यादावभिधाव्यवहारदर्शनात् मुख्यार्थनिरूपणप्रस्तावे तामभिधां लक्षयति तत्रेति । तत्र मुख्यार्थविषये अस्य शब्दस्य मुख्यो व्यापारः अभिधेत्युच्यते इत्यर्थः । शब्दव्यापारात् योऽर्थोऽव्यवधानेन गम्यते, सोऽर्थो मुख्यः, स हि यथा सर्वेभ्यो हस्तादिभ्योऽवयवेभ्यः पूर्वं मुखमवलोक्यते, तद्वत् सर्वेभ्यः प्रतीयमानेभ्योऽर्थेभ्यः पूर्वमवगम्यते, तस्मात् मुखमिव मुख्य इति "शाखादिभ्यो यः" इति (५ । १ । १०३) पाणिनिसूत्रेण यप्रत्ययः । मुख्यार्थविषयः शब्दोऽपि मुख्य इति बोध्यम् । सूत्रस्थस्य स इत्यस्यार्थमाह स इतीति । मुख्यार्थपरामर्शभ्रमं वारयितुं अस्येत्यस्यार्थमाह अस्येतीति । तथा च शक्त्यपरपर्याय संकेतितार्थबोधजनकव्यापारोऽभिधा.

---

१ उपाधेयस्येति । विशेष्यस्येत्यर्थः; व्यक्तेरिति यावत् ॥ २ एकतरपक्षपातिनी युक्तिर्विनिगमना तस्याः विरहोऽभाव इत्यर्थः ॥ ३ क्षोदक्षमः विचारसहः ॥

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणाऽऽरोपिता क्रिया ॥ ९ ॥**

संकेतश्च शक्तिग्राहकः समयः, स चास्मादयमर्थो बोद्धव्य इत्याकार इत्युक्तमेवेत्यनयोर्भेदः । अत एव वक्ष्यति "नाभिधा समयाभावात्" इति ॥

उद्देश्यक्रमानुरोधात् वाचकशब्दनिरूपणानन्तरं लाक्षणिकशब्दो निरूपणीयः, तन्निरूपणं लक्षणानिरूपणाधीनमिति लक्षणां लक्षयति मुख्यार्थेति । 'गङ्गायां घोषः' इत्यादौ प्रत्यक्षादिप्रमाणेन मुख्यार्थस्य शक्यार्थस्य (प्रवाहादिरूपस्य) बाधे तद्रूपेण तात्पर्याविषयत्वे सति, तद्योगे तस्य प्रत्यक्षादिप्रमाणेन बाधितस्य मुख्यार्थस्य योगे संबन्धे, साक्षात्संबन्धे इत्यर्थः, अमुख्येन लक्षणीयेन तीरादिनाऽर्थेन सह सामीप्यादिरूपसाक्षात्संबन्धे सतीति यावत्, रूढितः प्रसिद्धेः, अथेति विकल्पे, अथवेत्यर्थः, प्रयोजनात् शैत्यपावनत्वादिप्रतीतिरूपफलात्, शब्देन कर्त्रेति शेषः, यदिति ययेत्यर्थे लुप्तकरणतृतीयान्तमव्ययम्, यया (वृत्त्या) अन्योऽर्थः अर्थान्तरं (शक्यभिन्नः), तीरादिरूप इति यावत्, लक्ष्यते प्रतिपाद्यते सा (वृत्तिः) लक्षणेत्युच्यते इत्यर्थः । सा च वक्तृतात्पर्यरूपा, शक्यसंबन्धरूपा वा, शक्यतावच्छेदकारोपरूपा वेति अन्यदेतत् । आरोपितेति क्रियेति च न लक्षणघटकम्, किं तु वृत्तेः स्वरूपप्रदर्शनमात्रपरम् । सा हि (वृत्तिः) आरोपिता शक्यार्थव्यवहितलक्ष्यार्थविषयकत्वात् शब्दे कल्पिता, साक्षात्संबन्धेन शक्यार्थनिष्ठा, परम्परासंबन्धेन तु शब्दनिष्ठेत्यर्थः, क्रिया व्यापाररूपा चेति सूत्रार्थः । अथवा, यदिति लक्षणक्रियाविशेषणम्, अन्योऽर्थः यत् लक्ष्यते यत् प्रतिपाद्यते, सा लक्षणेत्यन्वयः, लक्ष्यते इति णिजन्तादाख्यातम्, णिजर्थो हेतुव्यापारः, हेतुश्च शब्द इति अन्यार्थप्रतीतिहेतुः शब्दव्यापारो लक्षणेत्यर्थः । एवं च प्रतिपत्तिहेतुर्हि वृत्तिः, न तु प्रतिपत्तिरेवेति प्रदीपकाराणां नव्यमतसमर्थनं गर्भस्रावेणैव गतमिति सुधासागरे स्पष्टम् । अत्र लक्ष्यते इत्यस्य प्रतिपाद्यते इत्यर्थकरणेन नात्माश्रयरूपो दोषः । यत्त्वत्र यदिति क्रियाविशेषणम्, तथा च, यत् लक्ष्यते यत् प्रतिपाद्यते, सा प्रतिपत्तिरेव (ज्ञानमेव) लक्षणेति कैश्चिद्व्याख्यातम्, तदज्ञानविजृम्भितम्, लक्षणाया अभिधाव्यञ्जनयोरिव वृत्तिरूपतया वृत्तिजन्यायाः प्रतिपत्तेर्लक्षणात्वासंभवात् । न हि वृत्तेर्व्यापारत्वे कश्चिद्विवादः, अस्मात्पदादयमर्थो बोद्धव्य इत्याकारिकेश्वरेच्छापि प्रेरणागर्भत्वेन साध्यरूपैवेति प्रतिभावयद्भिः सूक्ष्मदृशाऽवधातव्यम् । न च 'प्रतीतिर्लक्षणोच्यते' इत्यग्रिमग्रन्थविरोध इति वाच्यम्, तस्यैकदेशिमतोट्टङ्कनमात्रपरत्वात्, प्रतीतिपदस्य करणव्युत्पन्नत्वाद्वेति दिक् । केचित्तु प्रयोजनादिति ल्यब्लोपे पञ्चमी, प्रयोजनमुद्दिश्येत्यर्थ इत्याहुः । उद्द्योतकारास्तु प्रयोजनाभि-

संधेरित्यर्थः, प्रयोजनाभिसंधिपूर्वकं लाक्षणिकशब्दप्रयोगे वक्तुः प्रवृत्तिर्भवतीति प्रयोजनस्य लक्षणाप्रयोजकत्वं बोध्यमित्याहुः । तथा च बाध्रो योगः रूढिप्रयोजनान्यतरच्चेति हेतुत्रयं लक्षणाया इति सिद्धम् । अत्र सूत्रे रूढिलक्षणा प्रयोजनलक्षणा चेति लक्षणाया विभागद्वयमिति नरसिंहठक्कुरादीनां मतम्, प्रदीपसिद्धान्ते तु नात्र विभागः, किंतु "व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने" इति सूत्रे एवेति "लक्षणा तेन षड्विधा" इति सूत्रे स्फुटीभविष्यति । भद्रात्मन इत्यादिशाब्दव्यञ्जनावारणायाह मुख्यार्थबाधे इति । असंबन्धे लक्षणायां गङ्गापदात् यमुनातीरस्याप्युपस्थित्यापत्त्याऽतिप्रसङ्गस्तद्वारणायाह तद्योगे इति । चक्रवर्त्यादयस्तु योगपद प्रमाणान्तरानुत्थापकयोगपरम्, तेन धूमपदात् व्याप्यव्यापकभावसंबन्धेन वह्निज्ञाने तदप्रसङ्गः (१), तस्यानुमानोत्थापकत्वादित्याहुः । 'बाधे' इत्यस्य तद्रूपेण तात्पर्याविषयत्वे सतीत्यर्थकरणादेव 'मुख्यार्थबाधश्च शक्यतावच्छेदकरूपेण तात्पर्यविषयान्वयबाधः' इति प्रभाकारोक्तं संगच्छते । अत एव च कमलाकरादयः, मुख्यार्थस्यान्यपदार्थासंसर्ग एव बाधः, शुद्धमुख्यार्थस्य क्वापि बाधायोगात् । यद्यपि 'काकेभ्यो दधि रक्ष्यताम्' 'छत्रिणो यान्ति' इत्यादौ न मुख्यार्थस्य बाधः, तथापि तात्पर्यार्थविषयवाक्यार्थबोधाभावोऽभिप्रेतः, आद्ये उपघातकत्वेनैव मुख्यार्थस्यान्वयो न तु काकत्वेन, अन्त्ये चैकमार्थप्रवृत्तत्वेनैव मुख्यार्थस्यान्वयो न तु छत्रित्वेनेति नाव्याप्तिः । यत्र तु काकमात्रे तात्पर्यं तत्र नैव लक्षणा । एतेन तात्पर्यानुपपत्तिरेव लक्षणाबीजम्, नत्वन्वयानुपपत्तिरिति सूचितम् । यद्यपि 'यष्टीः प्रवेशय' 'गङ्गायां घोषः' इत्यादौ उभयापेक्षादर्शनात् विनिगमनाविरहः (२), तथापि 'गङ्गायां घोषः' इत्यत्र तात्पर्याभावे घोषपदे एव मीने लक्षणा किं न स्यात्, कुतश्च गङ्गापदेऽपि स्वार्थसंबन्धिनौकादौ न लक्षणा, तावताऽप्यन्वयानुपपत्तिशान्तेः; अतस्तात्पर्यानुपपत्तिरेव लक्षणाबीजमित्याहुः । उक्तंच परमलघुमञ्जूषायां नैयायिकमतानुवादावसरे नागोजीभट्टैः, शक्यसंबन्धो लक्षणा, अन्वयाद्यनुपपत्तिप्रतिसंधानं च लक्षणाबीजम्, वस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसंधानमेव लक्षणाबीजम्, अन्यथा 'गङ्गाया घोषः' इत्यत्र घोषपदे एव मकरादिलक्षणापत्तिः, तावताऽप्यन्वयानुपपत्तिपरिहारात्. 'गङ्गाया पापी गच्छति' इत्यादौ गङ्गादिपदस्य नरके लक्षणापत्तेश्च; अस्माकं तु भूतपूर्वपापावच्छिन्नलक्षकत्वे तात्पर्यान्न दोषः. "नक्षत्रं दृष्ट्वा वाचं विसृजेत्" इति विधावन्वयसंभवेऽपि तात्पर्यानुपपत्त्यैव लक्षणास्वीकारात्, एकानुगमस्वीकारेण निर्वाहेऽनेकानुगमस्वीकारे गौरवाच्चेति । तदुक्तं मीमांसकोन्मायामपि "नक्षत्रं दृष्ट्वा वाचं विसृजेत्" इति विधौ नक्षत्रदर्शनस्य कालविशेषोपलक्षकत्वात् सत्यपि [illegible]

१ तस्याः लक्षणाया अप्रसङ्गः ॥  २ एकतरपक्षपातिनी युक्तिर्विनिगमना तस्या विरहोऽभावः ॥

**कर्मणि कुशल इत्यादौ दर्भग्रहणाद्ययोगात् गङ्गायां घोष इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासंभवात् (१) मुख्यार्थस्य बाधे, विवेचकत्वादौ सामीप्ये च सबन्धे, रूढितः प्रसिद्धेः, तथा, गङ्गातटे घोष इत्यादेः प्रयोगात् येषां न तथा प्रतिपत्तिः**

---

नक्षत्रदर्शने वाक् न विसृज्यते, उपलक्षितस्य कालविशेषस्याभावात्, रात्रावसत्यपि नक्षत्रदर्शने वाक् विसृज्यते, तस्य सत्त्वादिति।

रूढिहेतुकायाः प्रयोजनहेतुकायाश्च लक्षणाया उदाहरणद्वयमेकदैव दर्शयन् सूत्रं व्याचष्टे **कर्मणी**ति। चित्रकर्मणीत्यर्थः। **कुशल इति**। कुशान् दर्भान् लाति आदत्ते (२) इति व्युत्पत्त्या कुशलपदं कुशग्राहिणि शक्तम्, दक्षे तु रूढ्या लाक्षणिकमिति भावः। न च मुख्यार्थबाधप्रतिसंधानेऽपि झटिति दक्षबोधाच्छक्तिरेव, अन्यथा मण्डपादिपदस्यापि (३) गृहादौ शक्त्यभावप्रसङ्ग इति वाच्यम्, क्लृप्तावयवशक्तिकस्यान्यत्र (४) लक्षणयैवोपपत्तावतिरिक्तशक्तिकल्पनाया अन्याय्यत्वात्, मण्डपादिपदस्यापि गृहादौ निरूढलक्षणाङ्गीकारात्। न चैवं पङ्कजादिष्वप्येवमापत्तौ योगरूढिविलोपापत्तिरिति वाच्यम्; तत्र योगार्थविशिष्टरूढ्यर्थस्यैव नियमत उपस्थित्या रूढिकल्पनेन वैषम्यात्। मुख्यार्थबाधप्रतिसंधानमपि व्युत्पन्नानामस्त्येव, कदाचिच्छक्तिभ्रमाद्बोधे तदभावेऽपि न क्षतिः (५)। ये तु कर्मणि कुशलः, लावण्यम्, मण्डपः, कुण्डलमित्यादौ दक्षत्वादेः प्रवृत्तिनिमित्तत्वात् व्युत्पत्तिनिमित्तस्य च झटित्यप्रतीतेर्बाधप्रतिसंधानं विनापि तत्प्रतीतेश्च, कुशेः कलच्प्रत्यये कुशलपदस्य वैयाकरणैः साधनाच्च रूढिशक्तिरेवात्रेति वदन्ति; तन्मते तैलपदमुदाहरणमिति बोध्यम्, तैलपदस्य तिलविकारद्रवे शक्तस्य सार्षपे निरूढलक्षणेत्युद्द्योते स्पष्टम्। रूढिहेतुकायां मुख्यार्थबाधं दर्शयति **दर्भग्रहणाद्ययोगा**दिति। दर्भग्रहणाद्ययोग्यत्वादित्यर्थः। प्रयोजनहेतुकामुदाहरन् तत्र मुख्यार्थबाधमुपदर्शयति **गङ्गायां घोष** इति। घोषो गोपालग्रामः तद्गृहं वा, 'घोष आभीरपल्लिः (६) स्यात्' इत्यमरात्। **मुख्यार्थस्य** दर्भग्राहकत्वादिरूपस्य प्रवाहादिरूपस्य च। **बाधे** बाधे सति। कुशग्राहकदक्षयोः मुख्यार्थलक्ष्यार्थयोः संबन्धमाह **विवेचकत्वादा**विति। विवेचकत्वं च सतो ग्रहणमसतः परित्यागरूपम्, तच्च कुशग्राहिणि दक्षे च वर्तते इति भावः। गङ्गातटयोर्मुख्यार्थलक्ष्यार्थयोः संबन्धमाह **सामीप्ये चे**ति। सामीप्यादौ चेत्यर्थः। **संबन्धे** संबन्धे सति। कुशलपदलक्षणायां रूढिं दर्शयन्नाह **रूढित इति**। रूढित इत्यस्यार्थमाह **प्रसि-**

---

१ 'घोषाद्यधिकरणत्वासंभवात्' इति क्वचित्पाठः॥ २ गृह्णाति॥ ३ मण्डं यूषं पिबतीति मण्डप इति व्युत्पत्तेरिति भावः॥ ४ अन्यस्मिन् अर्थे, दक्षादिरूपे॥ ५ न च मुख्यार्थ–क्षतिः–प्रभा॥ ६ कुटीकुग्रामयोः पल्लिरिति शाश्वतकोशः॥

तेषां पावनत्वादीनां धर्माणां तथाप्रतिपादनात्मनः प्रयोजनाच्च मुख्येन अमुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा ।

**स्वसिद्धये पराक्षेपः, परार्थं स्वसमर्पणम् ।**
**उपादानं लक्षणं चे-त्युक्ता शुद्धैव सा द्विधा ॥ १० ॥**

---

ढेरिति । प्रयोगप्रवाहादित्यर्थः । गङ्गापदलक्षणायां प्रयोजनमाह तथा गङ्गेति । तथाशब्दोऽत्र समुच्चयार्थकः । येषां पावनत्वादीनाम् । तथेति । विशेषतस्तीरगतत्वेनेत्यर्थं । गङ्गायामिवेति केचित् । अतिशयेनेत्यन्ये । प्रतिपत्तिः प्रतीति. । तथाप्रतिपादनात्मन इति । तथा प्रतिपादनरूपादित्यर्थः । 'अन्यत्रान्यशब्दप्रयोगस्तद्धर्मप्राप्त्यर्थः' इति न्यायादिति शेषः (१)। मुख्येनेति । इत्थंभूतलक्षणे तृतीयेयम्, तेन मुख्येनोपलक्षितोऽमुख्योऽर्थो लक्ष्यते इत्यर्थः । आरोपितेत्यस्य व्याख्यानमाह आरोपित इति । शब्दे कल्पित इत्यर्थः । क्रियेत्यस्य व्याख्यानमाह शब्दव्यापार इति । व्यापारो वृत्ति. । आरोपे हेतुमाह सान्तरार्थनिष्ठ इति । इदं व्यापारविशेषणम् । अन्तरं व्यवधान तेन सह वर्तत इति सान्तरः ( मुख्यार्थबाधाद्युपस्थित्या ) व्यवहितो योऽर्थः लक्ष्यरूपः तन्निष्ठः तद्विषयक इत्यर्थः । सर्वं वाक्यं कार्यनिष्ठमिति गुरूक्तिवत् (२) । यद्यपि 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्देन प्रत्यायितं स्रोतः तीरं लक्षयतीत्यर्थव्यापारो लक्षणा, न तु शब्दव्यापार., तथापि वाच्यधर्मो वाचके शब्दे आरोप्यते, अतः शब्दोऽपि लाक्षणिक इति भाव. (३) ॥

अर्थान्तरसंक्रमितवाच्यध्वन्यादिव्यवस्थायै लक्षणां कारिकात्रयेण षड्विधतया (४) विभजते स्वसिद्धये इति । स्वस्य शक्यार्थस्य (कुन्तादेः) सिद्धये अन्वयसिद्धये ( समभिव्याहृतपदार्थान्वयबोधविषयत्वासिद्धये ) पराक्षेपः परस्य अशक्यार्थस्य (कुन्त्यादेः ) आक्षेपः उपस्थापनम् उपादानम् उपादानलक्षणेत्युच्यते, परार्थं परस्य अशक्यस्य ( तीरादेः ) अन्वयबोधार्थं स्वसमर्पणं स्वस्य शक्यार्थस्य (प्रवाहादे.) समर्पणं त्यागः लक्षणं लक्षणलक्षणेत्युच्यते; यद्वा, स्वसमर्पणं स्वार्थीकरणम्. प्रवाहं स्वार्थं परित्यज्य गङ्गात्वादिना तीरादिबोधनादिति परमार्थः (५) । एवं च स्वार्थापरित्यागेन परार्थोपस्थितिरुपादानम्, स्वार्थपरित्यागेन परार्थोपस्थितिर्लक्षणमिति सिद्धम् । एत एवान्यत्रामहत्त्वा-

---

१ अन्यत्रा–शेष·–सार० ॥ २ सर्वं–वत्–प्रभा ॥ ३ यद्यपि–भाव –नरर० ॥ ४ उपादानलक्षणा लक्षणलक्षणा गौणसारोपा गौणसाध्यवसाना शुद्धसारोपा शुद्धसाध्यवसाना चेति [illegible] ॥
५ यद्वा–मार्थः–सारबोधिनी ॥

**कुन्ताः प्रविशन्ति यष्टयः प्रविशन्ति इत्यादौ कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते, तत उपादानेनेयं लक्षणा।**

**'गौरनुबन्ध्यः' इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते न तु शब्देनोच्यते 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इतिन्यायादित्युपादानलक्षणा तु नोदाहर्तव्या,**

---

र्था–जहत्स्वार्थे (१) इत्युच्येते, इत्थमुभाभ्यामुपादानलक्षणरूपाभ्यामुपाधिभ्यां द्विधा द्विविधा सा लक्षणा शुद्धैव उक्ता न तु वक्ष्यमाणा गौण्यपि असंभवादिति कारिकार्थः।

उपादानलक्षणामुदाहरति **कुन्ता इति**। कुन्तादीनामचेतनत्वात्प्रवेशनक्रियायामन्वयासंभव इति मुख्यार्थबाधः। **स्वसंयोगिनः** कुन्त्यादयः। अनेन मुख्यार्थयोगो दर्शितः। **आक्षिप्यन्ते** लक्ष्यन्ते (लक्षणया बोध्यन्ते)। ततः हेतोः। **उपादानेन** स्वार्थापरित्यागपूर्वकपरार्थग्रहणेन। अत्र कुन्तानां बाहुल्यप्रतीतिः प्रयोजनम्, कुन्तिनः प्रविशन्तीत्युक्ते 'छत्रिणो यान्ति' इत्यादौ छत्राणामिव कुन्तानां बाहुल्यप्रतीतिर्न स्यादिति भावः (२)। अन्येतु कुन्तगततैक्ष्ण्यस्य पुरुषेषु प्रतीतिः प्रयोजनमित्याहुः। **लक्षणेति**। उपादानलक्षणेत्यर्थः। 'काकेभ्यो दधि रक्ष्यताम्' इत्यपि उपादानलक्षणाया एवोदाहरणमिति प्रदीपे स्पष्टम्। काकपदेन दध्युपघातकं लक्ष्यते इति भावः।

मण्डनमिश्रास्तु 'गौरनुबन्ध्यः' इत्यादिकमुपादानलक्षणाया उदाहरणमाहुस्तन्मतं दूषयितुमनुवदति **गौरित्यादिना न्यायादिसन्तेन**। **अनुबन्ध्यः** आलम्भ्यः, हन्तव्य इति यावत्। श्रुतेः प्रभुसंमिततयाऽनुबन्धनस्यावश्यकर्तव्यत्वं दर्शयति **श्रुतीति**। श्रुतिविहिताऽनुबन्धनक्रिया मे मम (गोपदार्थस्य जातेः) कथं स्यादिति मुख्यार्थबाध इति हेतोः जात्या गोत्वरूपया व्यक्तिराक्षिप्यते लक्ष्यते (लक्षणया बोध्यते) इत्यर्थः; न चेयं लक्षणलक्षणा, जातेः प्रकारत्वात्, किं तूपादानरूपैवेति भावः। **उच्यते** अभिधया बोध्यते। ननु शक्तिः कुतो न तत्राह **विशेष्यमिति**। अभिधा शक्तिः विशेष्यं व्यक्तिरूपं धर्मिणं न गच्छेत् न यायात् न स्पृशेदित्यर्थः, तत्र हेतुमाह **क्षीणशक्तिरित्यादि**। (यतो) विशेषणे जातिरूपे उपाधौ (धर्मे) क्षीणशक्तिः विरतव्यापारा, 'नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायते'–इति न्यायेन विशेषणं प्रत्याय्य विरामादित्यर्थः। एवं च 'अनन्यलभ्यः शब्दार्थः'– इति न्यायेन जातिरेव शब्दार्थः, व्यक्तेराक्षेपलभ्यत्वादिति भावः। एवं मण्डनमिश्रमतमनूद्य तदसङ्गतमिति दूषयति **इत्युपादानलक्षणा**

---

१ अन्यत्रेति। शास्त्रान्तरे इत्यर्थः। जहत् स्वार्थो या वृत्तिं सा जहत्स्वार्था, द्वितीयान्तान्यपदार्थो बहुव्रीहिः। तदन्या अजहत्स्वार्था–इति समासः॥ २ इदमस्मत्कृतलौकिकन्यायमालायां छत्रिन्याये विस्तरेण लिखितमिति तत एव द्रष्टव्यम्॥

न ह्यत्र प्रयोजनमस्ति न वा रूढिरियम्, व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते, यथा क्रियतामित्यत्र कर्ता, कुर्वित्यत्र कर्म, प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि च ।

---

तु नोदाहर्तव्येति । तत्र हेतुमाह नहीति । अत्रेति । गौरनुबन्ध्य इत्यादौ गवादिशब्दस्य व्यक्तौ लक्षणायामित्यर्थः । प्रयोजनमस्तीति । कुन्ताः प्रविशन्तीत्यत्र बाहुल्यप्रतीतिवत् अत्र न किंचित् प्रयोजनमस्तीत्यर्थः । ननु प्रयोजनाभावेऽपि रूढिः कुतो न स्यात्तत्राह नवेति । रूढित्वं तु अनादित्वम्, सास्नादिषु तदभावात्; प्रवाहानादिता तु नोपलक्षणं विनेति न लक्षणेति कमलाकरः (१) । वस्तुतस्तु लक्ष्यार्थेन विना कृते शक्यार्थे प्रयोगो यस्य तादृशे पदे यल्लक्ष्यार्थबोधकप्रयोगबाहुल्यं सा रूढिः (२) । यथा, तिलविकारद्रवमात्रे प्रयुक्तस्य तैलपदस्य सार्षपे, गवादिपदस्य तु व्यक्तिं विना न क्वापि प्रयोग इति रूढ्यभावेन न लक्षणेति भावः । यद्येवं कथं तर्हि व्यक्तिप्रतीतिरत आह व्यक्तीति । अविनाभावित्वात् व्यक्तिं विना जातेरभावात् । आक्षिप्यते अनुमीयते । जातिर्व्यक्त्याश्रिता जातित्वात्, यद्वा, इयं गौर्गोत्वादित्यनुमानान्न लक्षणेत्यर्थः । न चानुमितायाः व्यक्तेरशाब्दत्वात्कथं शाब्देन संख्याकर्मत्वादिनाऽन्वयः "शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते"–इति न्यायादिति वाच्यम्, अनुमानस्य शब्दसहकारित्वात्; तथाचानुमानसहकारेण शब्देन जातिविशिष्टधीरित्यर्थः । न च वृत्त्या पदजन्यधीविषयत्वं शाब्दत्वे तन्त्रमिति वाच्यम्, लाघवेन पदजन्यत्वस्यैव तत्त्वादिति भाव इति कमलाकरादयः । उद्द्योतकारास्तु, आक्षिप्यते इति । आक्षेपोऽत्रानुमानम्, व्यक्तिं विनेत्यनेन व्याप्तिर्दर्शिता, वृत्तिप्रयोज्योपस्थितिश्च शाब्दादौ कारणम्, व्यञ्जना वाऽऽक्षेप इत्याहुः । अविनाभावेनाक्षेपे दृष्टान्तमाह यथेति । क्रियतामिति । कृतिः साश्रया गुणत्वादित्यनुमानेन कर्तुर्लाभ इति भावः । कुर्विति । कृतिः सविषया कृतित्वादित्यनुमानेन कर्मणो लाभ इति भाव. । उक्तरीत्या गुरुमते अर्थाक्षेपे दृष्टान्तमुक्त्वा भट्टमते शब्दाक्षेपे दृष्टान्तमाह प्रविशेति । प्रविशेत्यत्र गृहमिति कर्मपदं यथाऽऽक्षिप्यते, पिण्डीमित्यत्र भक्षयेति क्रियापदं यथाऽऽक्षि-

---

१ उद्धृते तथैव काशीमुद्रिते च कमलाकरसन्दर्भे कुत्रचित् क्वचित् अशुद्धिरस्तीति संभाव्यते । तथापि यथास्थितस्यास्य सदर्भस्य यथाकथंचित्तात्पर्यं वर्ण्यते,– गोव्यक्तीनां सास्नाद्यवयवघटितत्वेन [illegible] जन्यत्वात् अनादित्वरूपं रूढित्वं नैकस्यामपि व्यक्तौ संभवति । यदि च व्यक्तिविशेषस्य नाशेऽपि व्यक्तिप्रवाहस्यानादित्वमस्ति इति प्रवाहानादित्वमेव रूढित्वमित्युच्यते, तदा गोपदस्य प्रवाहानादित्वरूप° अर्थे उपलक्षणम् ( अर्थात् लक्षणां ) विना न संभवति । जातिशक्तिवादिना केषांचिन्मते जातौ शक्तेरिव लक्षणाया अपि जातावेव युक्तेस्तौल्यात् गोजातीगत्वादौ अनादित्वरूपं ( अनादिप्रयोगरूपं वा ) रूढित्वं नासंभवि, ततश्च लक्षणा तत्र तत्र संभवत्येव । वस्तुतः यथास्थितः कमलाकरसन्दर्भो न विशदो नापि चास्माकं रुचिर इति मत्वाऽऽह वस्तुतस्त्विति ॥ २ लक्ष्यार्थेन–इति–उद्द्यो० ॥

**पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र च रात्रिभोजनं न लक्ष्यते श्रुतार्थापत्ते-रर्थापत्तेर्वा तस्य विषयत्वात्।**

**गङ्गायां घोष इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयति इत्येवमादौ लक्षणेनैषा लक्षणा। उभयरूपा चेयं शुद्धा, उपचारेणामिश्रितत्वात्।**

---

प्यते इति क्रमेणान्वयः। एवं जात्या व्यक्तिराक्षिप्यते इति दृष्टान्तार्थः। पिण्डी च गुडः पिण्याकं वा ग्रासो वा।

केचित्तु 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति वाक्ये रात्रिभोजनवानिति लक्ष्यते, भोजनाभावसमानाधिकरणपीनत्वप्रयुक्तोत्कर्षस्य प्रतीतेः प्रयोजनस्य सत्त्वात्। सेयं लक्षणा दिवा न भुङ्क्ते इति मुख्यार्थमादायैव भवतीत्युपादानरूपा, अर्थवादे प्राशस्त्यलक्षणावद-र्धमन्तर्वेदीतिवच्च वाक्येऽपि लक्षणा साध्वी, पीनत्वेनैव सामानाधिकरण्यात् रात्रिभोजनं वा लक्ष्यते इत्याहुस्तन्मतं दूषयति **पीन इति**। **न लक्ष्यते** न लक्षणया बोध्यते। कुतो न लक्षणेत्याशङ्क्य भट्टमते दिवाभोजनाभाववतः पीनत्वं रात्रिभोजनं विना-ऽनुपपन्नमित्यनुपपत्त्या रात्रौ भुङ्क्ते इति शब्दः कल्प्यते, गुरुमते तु तदर्थमात्रं कल्प्यते इत्याह **श्रुतार्थापत्तेरित्यादिना**। श्रुताच्छब्दादर्थस्यापत्तिरापतनं श्रुतार्थापत्तिः, अर्थादर्थस्यापत्तिरापतनमर्थापत्तिरिति संकेते सोमेश्वरः। श्रुतं शब्दः तत्कल्पकार्थापत्तेरित्यर्थ इत्युद्द्योतकाराः। यत्रानुपपद्यमानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिः, यथा द्वारमिति शब्दः पिधेहीति क्रियापदम्, इयमेव पदाध्याहारः। यत्र च दृष्टः श्रुतो वाऽर्थोऽनुपपन्नोऽर्थान्तरं कल्पयति सा अर्थापत्तिः, यथा तत्रैव द्वारमित्यर्थो-ऽनुपपन्नः पिधेहीति क्रियां कल्पयति, इयमेवार्थाध्याहार इति, मतभेदेनोभयम् (१) इति भावः। केचित्तु आक्षिप्यते इति यथेति च पदयोः सर्वत्रानुषङ्गेणैव योज्यम्, यथा क्रियतामित्यत्र कर्ता आक्षिप्यते (न लक्ष्यते), यथा प्रविशेत्यादौ गृहमित्याद्याक्षिप्यते (न लक्ष्यते), यथा पीन इत्यत्र रात्रिभोजनमाक्षिप्यते (न लक्ष्यते), तथा जात्या व्यक्तिराक्षिप्यते (न लक्ष्यते) इति (२) अन्वयमाहुः। **तस्य** रात्रिभोजनस्य।

उपादानलक्षणां निरूप्य लक्षणलक्षणामुदाहरति **गङ्गायामिति**। सूत्रस्थं परार्थमित्येतद्व्याकरोति **तटस्येति**। स्वसमर्पणमित्येतद्व्याकरोति **गङ्गाशब्द इति**। **स्वार्थं** स्वशक्यम्, प्रवाहरूपमर्थम्। **अर्पयति** त्यजति। यद्वा, स्वार्थमिति भावपरम्, तेन स्वार्थत्वं तटे करोति इत्यर्थः, गङ्गात्वेन तीरबोधनादिति भावः। उपादानलक्षणायां शक्यस्यापीतरपदार्थान्वयः, इह तु लक्ष्यस्यैवेति भेदः। **लक्षणेन** स्वार्थसमर्पणेन, (उपलक्षिता) **एषा**

---

१ यत्रानुपपद्य- उभयम्-विव०॥ २ पदयो- इति- कमलाकर.॥

**अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्, तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः, गङ्गासंबन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः॥**

---

**लक्षणा** लक्षणलक्षणेत्यर्थः। शुद्धैवेत्येतद्व्याकरोति **उभयरूपेति**। उक्ता इयं द्विरूपा शुद्धैव न गौणीत्यर्थः। शुद्धत्वे हेतुमाह **उपचारेणेति**। सादृश्येन संबन्धेन प्रवृत्तिरुपचारः तेनामिश्रितत्वात् असंबन्धात्। एवंचोपचाराभिश्रिता शुद्धा, उपचारामिश्रिता गौणी, यथा गौर्वाहीकः गौरयमिति च वक्ष्यते, तत्र लक्ष्यो वाहीक, लक्षको गौरिति बोध्यम्।

अत्र केचित्, गौर्वाहीक इत्यादिगौण्यां शक्यार्थलक्ष्यार्थयोः सादृश्यादिसंबन्धैरभेदः प्रतीयते, शुद्धायां तु शक्यार्थलक्ष्यार्थयोर्भेदः प्रतीयते, तदेव च औदासीन्यापरपर्यायं भेदप्रतीतिरूपं ताटस्थ्यं नाम, इदमेव च शुद्धायाः गौणीतो भेदकम्, न तूपचारमिश्रणमित्याहुः, तन्मत निराकरोति **अनयोरिति**। भेदयोरिति शेषः। इदं सप्तम्यन्तम्, उक्तयोरुपादानलक्षणा-लक्षणलक्षणारूपयोः शुद्धायाः भेदयोरित्यर्थः। **लक्ष्यस्य** तीरादेः, **लक्षकस्य** गङ्गादेश्च **भेदरूपं** भेदप्रतीतिरूपं **ताटस्थ्यम्**औदासीन्यं न 'अस्ति' इति शेषः, किंतु अभेदप्रतीतिरेवेत्यर्थः। यद्वा, लक्ष्यस्य लक्षकस्य च भेदप्रतीतिरूप ताटस्थ्यं न भेदरूपं भेदो रूप्यतेऽनेनेति भेदरूपं न भेदकमित्यर्थः, गौणीतः शुद्धायाः न भेदकमिति यावत्, अभेदबुद्धिं विना प्रयोजनप्रतिपत्तेरभावादिति भावः। एतदेव विशदयति **तटादीनामिति**। लक्ष्यार्थानामित्यर्थः। **गङ्गादिशब्दैः** गङ्गादिबोधकशब्दैः। **प्रतिपादने** बोधने सति। **तत्त्वप्रतिपत्तौ हीति**। हिशब्दः एवार्थे, शक्यलक्ष्ययोर्गङ्गातीरयोरभेदप्रतिपत्तौ सत्यामेवेत्यर्थः। **प्रतिपिपादयिषितेति**। प्रतिपादयितुमिष्टस्य प्रयोजनस्य गङ्गागतशैत्यपावनत्वादेः संप्रत्ययः प्रतीतिः, तीरादाविति शेषः; न तु भेदप्रतीतौ, अभेदबुद्धिं विना प्रयोजनाप्रतीतेः, अतो न ताटस्थ्यं भेदकमित्यर्थ.। पावनत्वादीनां प्रयोजनज्ञानविषयत्वेन प्रयोजनत्वव्यपदेशः प्रत्यक्षविषयतया विषयस्य प्रत्यक्षव्यपदेश इव। अयं भावः, 'अन्यत्रान्यशब्दप्रयोगस्तद्धर्मप्राप्त्यर्थ.' इति न्यायेन तीरे गङ्गाशब्दप्रयोगो गङ्गागतशैत्यपावनत्वादिप्रतीत्यर्थः (१)। शैत्यादिप्रतीतिस्तु गङ्गात्वेन तटस्य प्रतीतावेव जायते, न तु गङ्गासंबन्धमात्रप्रतीतौ. न वा तीरमात्रप्रतीतौ, तथा सति 'गङ्गातटे घोषः' इत्यत्रापि संबन्धप्रतीतेः शक्यलक्ष्यप्रतीत्योः फलभेदो न स्यात्। तदेतदाह **गङ्गासंबन्धेत्यादिना को भेद इत्यन्तेन**। **मुख्यशब्दाभिधानादिति**। मुख्यशब्दप्रयोगापेक्षयेत्यर्थः। **को भेद इति**। क फलातिशय इत्यर्थ.। तथा सति

---

१ नतुभेद- रत्यं.- कमलाकर.॥

**सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।**

आरोप्यमाणः आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा ॥

**विषय्यन्तः कृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ॥ ११ ॥**

विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णे अन्यस्मिन्नारोपविषये सति सा साध्यवसाना स्यात् ॥

---

'गङ्गातीरे घोषः' इति वाचकं शब्दं स्वायत्तं विहाय 'गङ्गायां घोषः' इत्यवाचकशब्दप्रयोगानुपपत्तिरेव स्यात्, 'स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे' इति न्यायात् । अतः शुद्धायामप्यभेदप्रतीतेर्न ताटस्थ्यं भेदकं किंतूपचारामिश्रणमेव भेदकमिति भावः ॥

ननु गौणीनामान्या वृत्तिरस्ति, तथा च कथं शब्दार्थयोस्त्रैविध्यमिति हृदि कृत्वा गौणीं लक्षणायामन्तर्भावयन् भेदान्तरमाह **सारोपेति** । तुशब्देन पूर्वद्वयीव्यवच्छेदः, पूर्वद्वयी शुद्धैवेत्युक्तम् । विषयी आरोप्यमाणः ( गवादिः ), विषयः (आरोपस्य ) आश्रयः वाहीकादिश्च, यत्र यादृशलक्षणास्थले, तथा तेनैव रूपेण, स्वस्वधर्मप्रकारेणेति यावत्, उक्तौ सामानाधिकरण्येन शब्दप्रतिपाद्यौ, 'भवतः' इति शेषः, सा अन्या शुद्धा गौणी च सारोपा सारोपलक्षणेत्युच्यते इत्यर्थः । विषयीत्यस्यार्थमाह **आरोप्यमाण इति** । विषय इत्यस्यार्थमाह **आरोपविषय इति** । आरोपाधिकरणमित्यर्थः । तथेत्यस्यार्थमाह **अनपह्नुतभेदाविति** । भेदो वैधर्म्यं तच्च गोत्ववाहीकत्वादि, प्रकाशितवैधर्म्यावित्यर्थः । अनेन सारोपसाध्यवसानयोर्भेदो दर्शितः । 'उक्तौ भवतः' इत्यस्यार्थमाह **सामानाधिकरण्येन निर्दिश्येते इति** । समानविभक्तिकपदाभ्यामुपस्थाप्येते इत्यर्थः, सप्रयोजनमिति शेषः । **सारोपेति** । आरोपेण सह वर्तत इति सारोपेत्यर्थः, विषयविषयिणोर्भेदेनोपन्यासोऽत्रारोपपदार्थः । उदाहरणं तु 'गौर्वाहीकः' इत्यग्रे वक्ष्यते इति बोध्यम् ॥

भेदान्तरमाह **विषयीति** । विषयिणा आरोप्यमाणेन ( गवादिना ) अन्यस्मिन् आरोपविषये ( आरोपाश्रये वाहीकादौ ) अन्तःकृते निगीर्णे सति सा 'साध्यवसानिका साध्यवसानलक्षणेति सूत्रार्थः । तदेवाह **विषयिणेत्यादि** । **निगीर्णे इति**। विषयवाचकवाहीकादिपदेनानुक्ते इत्यर्थ इति केचित् । अन्ये तु विषयनिष्ठासाधारणग्रहं विना विषयिणा स्वतादात्म्येन प्रत्यायिते इत्यर्थ इत्याहुः । **साध्यवसानेति** । विषयनिर्ग-

**भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ**

**इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ गौर्वाहीक इत्यत्र गौरयमित्यत्र च।**

---

रणेन विषयिणोऽभेदप्रतिपत्तिरध्यवसानं तेन सह वर्तत इति साध्यवसानेत्यर्थः, विषयिमात्रं यत्र निर्दिश्यते न तु विषयोऽपि सा साध्यवसानेति यावत्। उदाहरणं तु गौरयमिति वक्ष्यते, अत्र विषयिणा गवा विषयो वाहीको निगीर्ण इति साध्यवसानलक्षणेति बोध्यम्। इदमत्र बोद्धव्यम्, यत्र विषयनिष्ठासाधारणधर्मप्रतिपत्तिसहकृताऽन्यस्यान्यतादात्म्यप्रतीतिः सा सारोपा। यत्र विषयनिष्ठासाधारणधर्मप्रतीत्यसहकृताऽन्यस्यान्यतादात्म्यप्रतीतिः सा साध्यवसाना (१)। एवं च लक्ष्यवाचकपदसत्त्वासत्त्वमात्रेणारोपाध्यवसानव्यवहार इति बोध्यम्॥

सारोपसाध्यवसानरूपयोर्लक्षणयोरेव गौणशुद्धभेदाभ्यां प्रत्येकं द्वैविध्यं सूचयन् गौणीशुद्धयोर्लक्षणमाह **भेदाविमाविति**। इमौ आरोपाध्यवसानरूपौ भेदौ सादृश्यात् सादृश्यरूपसंबन्धात् गौणौ गौणशब्दवाच्यौ, तथा संबन्धान्तरतः सादृश्यान्यसंबन्धात् शुद्धौ च विज्ञेयावित्यर्थः। गौणावित्यत्र गुणेभ्य आगतौ गौणाविति विग्रहः, "तत आगतः" इत्यण् प्रत्ययः। तथाच मुख्यार्थबाधादित्रयहेतुसत्त्वात् गौण्याः लक्षणायामन्तर्भाव इति भावः। मुख्यार्थसंबन्धस्तु सजातीयगुणवत्त्वम्। मूलव्याख्यया सह सारोपसाध्यवसानौ गौणीभेदावुदाहरति **इमाविति**। **आरोपाध्यवसानरूपाविति**। विरुद्धधर्मरूपेण प्रतीतयोरपि सामानाधिकरण्येन सप्रयोजनो निर्देश आरोपः, तदन्ययोस्तथा निर्देशोऽध्यवसानमिति विवरणकारः। **गौर्वाहीक इति**। इदं गौणसारोपाया उदाहरणम्। वाहीको नाम देशविशेषः (२), तत्रत्यः पुरुषो वाहीकः; केचित्तु वहिर्भवो वाहीक इति व्युत्पत्त्या शास्त्रीयाचाराद्बहिर्भूत इत्यर्थः, "वहिषष्टिलोपो यञ्च" "ईकक्च" इति वार्तिकद्वयेन वहिषष्टिलोपे ईकक्प्रत्यये च कृते वबयोरभेदात् वाहीक इति रूपमित्याहुः। **गौरयमिति**। इदं गौणसाध्यवसानाया उदाहरणम्। अत्र इदंशब्देन पुरोवर्तित्वरूपेण वाहीकादेरुपस्थितिः। यदि इदंशब्दरूपविषयवाचकपदसत्त्वाद्गौणसारोपाया एवेदमुदाहरणमिति दुराग्रहः, तदा गौणसाध्यवसानाया उदाहरणं तु 'गौः पठति' 'गां पाठय' इत्याद्यूह्यम्। शुद्धसारोपाया उदाहरणमायुर्घृतमिति, शुद्धसाध्यवसानाया उदाहरणमायुरेवेदमिति चानुपदमेव स्फुटीभविष्यति।

---

१ इदमत्र– साना– सारबोधिनी॥ २ पञ्जाब इति प्रसिद्धः॥

**अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्ति (१) इति केचित् । स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयते इत्यन्ये । साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यते इत्यपरे ।**

---

अत्र वाहीकादौ गवादिशब्दप्रवृत्तिनिमित्तानां विप्रतिपत्तिं (२) दर्शयति **अत्रहीति**। यद्वा, गौण्याः स्वरूपे मतभेदानाह **अत्र हीति** । अथवा, वादिभेदेन लक्ष्यविकल्पमाह **अत्र हीति** । गौर्वाहीकः गौरयमित्यत्र हीत्यर्थ इति केचित्, गौर्वाहीक इत्यत्र हीत्यर्थ इत्यन्ये । स्वस्य गोशब्दस्यार्थो गोत्वं जातावेव शक्तेः, तस्य सहचारिणः समानाधिकरणाः । जाड्यमान्द्यादिगुणानां गोपदाशक्यत्वादाह **लक्ष्यमाणा** इति । गोशब्देन लक्ष्यमाणा इत्यर्थः । नन्वेवं वाहीकेन कथमन्वय इत्यत आह **परार्थाभिधाने** इति । परार्थो वाहीकस्तस्याभिधाने अभिधया बोधने इत्यर्थः । **प्रवृत्तिनिमित्तत्वं** शक्यतावच्छेदकत्वम् । **उपयान्ति** प्राप्नुवन्ति । लक्षणया प्रथमं जाड्याद्युपस्थितिः, ततः अभिधया वाहीकस्य बोध इति भावः (३) । गोशब्दो हि भिन्नार्थकत्वात् वाहीकेन सहानुपपद्यमानसामानाधिकरण्यत्वेन बाधितमुख्यार्थः सन् स्वार्थसहचारित्वसंबन्धेन जाड्यादिगुणान् लक्षयित्वा तानेव प्रवृत्तिनिमित्तीकृत्य (शक्यतावच्छेदकीकृत्य ) वाहीकमभिधया बोधयतीति निष्कर्षः । तथा च जाड्यवदभिन्नो वाहीक इति शक्तिलक्षणाभ्यां बोध इति बोध्यम् (४) । तदेतत्सर्वं काव्यप्रदीपे शब्दान्तरैर्व्याख्यातम्, तथाहि, गोशब्दस्य शक्त्या गोत्वं प्रवृत्तिनिमित्तम्, लक्षणया तु गोशब्दार्थगतं जाड्यमान्द्यादि प्रवृत्तिनिमित्तं भवतीति गोशब्देन जडत्वेन रूपेण वाहीकः शक्त्या बोध्यते इति । केचिदित्यस्वरसोद्भावनम्, तद्बीजं तु गोपदस्य वाहीके संकेताभावेनाभिधाभावरूपम्, जाड्यादिगुणानां लक्ष्यत्वात् अशक्यतया प्रवृत्तिनिमित्तत्वासंभवश्च, गोवृत्तिजाड्यादिगुणानां वाहीकावृत्तित्वरूपं चेति बोध्यम् । मतान्तरमाह **स्वार्थेति**। अभेदेन साजात्येन । **गुणा एवेति**। न तु गुणीत्यर्थः । तस्याक्षेपेण वाहीकशब्दादेव लाभादिति भावः । तेनान्यलभ्यत्वेन नाभिधा तदाह **नत्विति** । न तु ( गोशब्देन ) परार्थो वाहीकोऽभिधीयते अभिधया प्रतिपाद्यते इत्यर्थः । तथाच जाड्यसजातीयजाड्यवान् वाहीक इति बोध इति भावः (५)। **अन्ये इति** । अन्ये इत्यस्मिन्नपि पक्षे अस्वरसोद्भावनम्, तद्बीजं तु एकधर्मिबोधकत्वाभावात् गौर्वाहीक इति सामानाधिकरण्यानुपपत्तिः । न च जातिशक्ताविवानुमानसहकृतपदेन व्यक्तिबोधान्नानुपपत्तिरिति

---

१ उपयन्तीति पाठान्तरम् ॥ २ विप्रतिपत्तिं विवादम् ॥ ३ लक्षणया–भावः–विव०.॥ ४ तथाच–बोध्यम–प्रभा ॥ ५ तथाच– भावः– सैव ॥

उक्तं चान्यत्र "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता" इति।

---

वाच्यम्, अन्वयानुपपत्त्या प्रसरन्त्याः लक्षणायाः साक्षादन्वययोग्यार्थबोधकत्वौचित्यमिप्रायादिति प्रदीपोद्द्योतयोः स्पष्टम् । नरसिंहठक्कुरास्तु अन्ये इत्यस्वरसोद्भावनम्, तद्बीजं च अनन्यलभ्यतया धर्मिणोऽलक्ष्यत्वे तीरादेरपि गङ्गापदलक्ष्यताऽनापत्तिरित्याहुः। स्वमतमाह **साधारणेति** । साधारणाः सजातीयाः गुणा जाड्यमान्द्यादयस्तदाश्रयत्वेनेत्यर्थः । गोव्यक्तिवृत्तिजाड्यादिसमानगुणाश्रयत्वेन संबन्धेनेति यावत् । **परार्थ एव** वाहीक एव **लक्ष्यते** लक्षणया बोध्यते । गोशब्देनेति शेषः । तथा चात्रमते जाड्यादिगुणविशिष्टे एव लक्षणा, अतो न सामानाधिकरण्यानुपपत्तिरिति भाव. । **अपरे** इति। न परे अपरे, स्वीया इत्यर्थः; इत्यस्मन्मतमिति भावः ।

'साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यते' इति स्वोक्तेऽर्थे मीमांमकसंमतिमाह **उक्तं चेति । अन्यत्रेति** । भट्ट (१) वार्तिके इत्यर्थ. । वार्तिकमेव दर्शयति **अभिधेयाविनेति** । अस्य 'मानान्तरविरुद्धे (२) तु मुख्यार्थस्य परिग्रहे' इत्यादिः । मुख्यार्थस्य प्रवाहादिरूपार्थस्य परिग्रहे स्वीकारे मानान्तरेण प्रत्यक्षादिना विरुद्धे सति या अभिधेयेन वाच्येन (प्रवाहादिरूपार्थेन) अविनाभूतं संबद्धं (तटादि) तस्य प्रतीतिः प्रतीतिकरणभूतो व्यापार; (प्रतीतिरिति करणे क्तिन्प्रत्यय.) लक्षणोच्यते लक्षणेत्युच्यते इत्यर्थः। यथा 'गङ्गायां घोषः' इत्यादौ मुख्यार्थः प्रवाहो घोषाधिकरणत्वासंभवात्प्रत्यक्षविरुद्ध इति बोध्यम् । उपचारमिश्रां गौणीमाह **लक्ष्यमाणेति** । योगादिति ल्यब्लोपे पञ्चमी, लक्ष्यमाणाः साधारण्येन दृश्यमानाः, यद्वा, लक्ष्यमाणस्य प्रतीयमानस्य गोपदार्थस्य गुणा. जाड्यादयस्तैर्योगं लक्ष्यतावच्छेदकमवाप्य वृत्तेर्गौणतेष्टेत्यर्थ इति कमलाकरमतम् । लक्ष्यमाणाः लक्ष्यतावच्छेदकाः गुणाः जाड्यादयस्तैरेव यदि योग. तद्द्वारको यदि योगः शक्यसंबन्धस्तदा गौणी वृत्तिरित्यर्थः, गुणलक्ष्यतावच्छेदकिका लक्षणा गौणीति भाव इति प्रदीपमतम् । लक्ष्यमाणाः 'जाड्यादिगुणविशिष्टे एव लक्षणा' इत्युक्तरीत्या लक्ष्यार्थविशेषणतया लाक्षणिकबोधविषया. ये गुणाः जाड्यादय तैर्योगात् संबन्धादित्यर्थ इति विवरणकारमतम् । लक्ष्यमाणगुणैरित्यस्य ज्ञायमानगुणैरित्यर्थः, यद्गुणज्ञानपूर्वकं वाहीके गोशब्दप्रयोगस्तद्गुणरूपात्संबन्धादिति यावदिति उद्द्योतकारमतम् । वस्तुतस्तु ल-

---

१ भट्टोऽत्र कुमारिल. । जैमिनिसूत्रोपरि वार्तिककार. ॥ २ 'मानान्तरविरोधे तु मुख्या[illegible]परिग्रहे' इति ,पाठान्तरपक्षे मानान्तरविरोधे इति निमित्तसप्तमी, [illegible], [illegible] मानान्तरविरोधनिमित्तके मुख्यार्थस्य प्रवाहादिरूपस्यापरिग्रहे त्यागे सतीति फलितोऽर्थः ॥

अविनाभावोऽत्र संबन्धमात्रं न तु नान्तरीयकत्वम्, तत्त्वे हि (१) मञ्चाः क्रोशन्तीत्यादौ न लक्षणा स्यात्, अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम् । आयुर्घृतम्, आयुरेवेदमित्यादौ च सादृश्यादन्यत्

---

क्ष्यमाणस्य वाहीकपदार्थस्य गुणैः जाड्यादिभिः यदि योगः तद्द्वारको यदि संबन्धस्तदा गौणी वृत्तिरिति मतमेव साधीय इति बोध्यम् । ननु अविनाभावो व्याप्तिः सा चानुमानोत्थापकत्वान्न लक्षणाहेतुरत आह **अविनाभाव इति** । अत्र भट्टवार्तिके । **नान्तरीयकत्वमिति** । येन विना यन्न भवति तन्नान्तरीयकम्; अन्तरा विना भवोऽन्तरीयः, गहादित्वाच्छप्रत्ययः, ततः स्वार्थे कप्रत्ययः, नैकधेत्यादिवत् नशब्देन समासश्च, नान्तरीयकस्य भावो नान्तरीयकत्वम्, व्याप्तिरित्यर्थः, तत्सत्ता नियतसत्ताकत्वमिति यावत् । यथा जातिव्यक्त्योर्नान्तरीयकत्वं तथा वाच्यार्थलक्ष्यार्थयोर्न नान्तरीयकत्वं किं तु संबन्धमात्रमभिप्रेतमिति भावः । नान्तरीयकत्वाङ्गीकारे दोषमाह **तत्त्वेहीति** । नान्तरीयकत्वे हीत्यर्थः । **न लक्षणा स्यादिति** । मञ्चाः क्रोशन्तीत्यादौ मञ्चानामचेतनत्वेन क्रोशनस्यासंभवे तत्सिद्ध्यर्थं मञ्चपदस्य मञ्चस्थपुरुषे लक्षणा इष्यते, सा न स्यादित्यर्थः । मञ्चस्य भूतलवृत्तितया मञ्चस्थस्य मञ्चवृत्तितया दैशिकव्याप्तेरभावात्, मञ्चस्थं विनापि मञ्चप्रतीतेः कालिकव्याप्तेरप्यसंभवादिति भावः । ननु क्रोशनकाले व्याप्तिरस्त्येवेत्यत आह **अविनाभावे चेति** । व्याप्तौ सत्यां तु इत्यर्थः । **आक्षेपेण** अनुमानादिना । तथाच 'गङ्गायां घोषः' इत्यादौ शब्दसहकृतानुमानेनोपस्थिते तटादौ घोषाधिकरणत्वान्वय इति भावः । **इत्युक्तमिति** । "स्वासिद्धये पराक्षेपः" इति सूत्रे गौरनुबन्ध्य इत्यत्रोक्तमित्यर्थः ।

सादृश्यसंबन्धमूलकयोर्गौणयोः सारोपसाध्यवसानयोर्लक्षणाभेदयोरुदाहरणमभिधाय संबन्धान्तरमूलकयोः शुद्धयोः सारोपसाध्यवसानयोर्लक्षणाभेदयोरुदाहरणं दर्शयन् पद्यस्थं संबन्धान्तरत इत्येतद्व्याकरोति **आयुर्घृतमित्यादिना** । 'आयुर्घृतं यशस्त्यागो भयं चोरः सुखं प्रिया । वैरं द्यूतं गुरुर्ज्ञानं श्रेयस्तीर्थनिषेवणम्' इति माणिक्यचन्द्रकृत संकेते स्पष्टम् । इदं शुद्धसारोपाया उदाहरणम् । आयुर्दीर्घकालजीवनम्, जनकत्वं संबन्धः, आयुर्जनकत्वात् घृतमायुःशब्देन लक्ष्यते इत्यर्थः । तेनायुर्जनकाभिन्नं घृतमिति बोधः । शुद्धसाध्यवसानाया उदाहरणमाह **आयुरेवेदमिति** । अत्रेदंशब्देन पुरोवर्तित्वरूपेणैव घृतादेरुपस्थितिः (२) । यदि इदंशब्दरूपविषयवाचकपदसत्त्वात् शुद्धसारोपाया

---

१ तथात्वे हीति पाठान्तरम् । नान्तरीयकत्वे हीति तदर्थः ॥ २ अत्रेदं–स्थितिः–विवरणम् ॥

कार्यकारणभावादि संवन्धान्तरम् । एवमादौ च कार्यकारणभावादिलक्षणपूर्वे आरोपाध्यवसाने । अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदावगमश्च प्रयोजनम् । शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि ।

---

एवेदमुदाहरणमिति दुराग्रहः, तदा शुद्धसाध्यवसानाया उदाहरणं तु 'आयुः पीयते' इत्याद्यूह्यम् । इत्यादाविति । आदिशब्दात् 'इन्द्रार्था स्थूणा' इत्यादिपरिग्रहः । कार्यकारणभावादीति । आदिशब्दात् तादर्थ्यादिपरिग्रहः । संवन्धान्तरमिति । वर्तत इति शेषः । ननु संवन्धान्तरस्य विद्यमानतामात्रं न शुद्धात्वप्रयोजकम्, गौर्वाहीक इत्यत्राप्येकवृद्धिविषयत्वादेः संवन्धान्तरस्य सत्त्वेन शुद्धात्वापत्तेः, आयुर्घृतमित्यत्रापि प्रमेयत्वादिना सादृश्यसत्त्वेन गौणीत्वापत्तेः, अपि तु तत्तत्संवन्धपूर्वकत्वं तथात्वप्रयोजकम्, तत्कथं सादृश्यान्यसंवन्धसत्तामात्रेणेदं शुद्धसारोपसाध्यवसानोदाहरणमित्यत आह एवमादाविति । कार्यकारणभावादि लक्षणं स्वरूपं यस्य स कार्यकारणभावादिलक्षणः सादृश्यातिरिक्तः संवन्ध इत्यर्थः, स एव पूर्वो (हेतुभूतः) ययोः (आरोपाध्यवसानयोः) ते तत्पूर्वे इत्यर्थः । पूर्ववर्तित्वेन हेतुता । तथा चात्र न तादृशसंवन्धस्य सत्तामात्रम्, अपि तु तत्पूर्वकत्वमपीति नोदाहरणताक्षतिरित्यर्थः । अन्यथा 'सादृश्यादन्यत्' इति पूर्वफक्किकया समम् 'एवमादौ' इति फक्किकायाः पौनरुक्त्यापात इति बोध्यम् । कार्यकारणभावादिलक्षणपूर्वमिति पाठे तु स एव पूर्वो यत्र आरोपाध्यवसानक्रियायामिति क्रियाविशेषणम् । आरोपाध्यवसाने इति । भवत इति शेषः । उक्तेषु चतुर्षु गौणीशुद्धोदाहरणेषु रूढ्यभावात्प्रयोजनविवेकं क्रमेणाह अत्रेति । गौर्वाहीक इत्यादिचतुर्षूदाहरणेषु मध्ये इत्यर्थः । गौणभेदयोरिति । इदं सप्तम्यन्तम्. गौर्वाहीकः गौरयमित्यनयोरित्यर्थ । भेदेऽपि ताद्रूप्यप्रतीतिरिति । भेदेऽपि (वाहीकादिपदप्रयोगात्) वैधर्म्ये भासमानेऽपि यत् ताद्रूप्यं तादात्म्यं तस्य प्रतीतिरित्यर्थः, गोत्ववाहीकत्वरूपाभिन्नधर्मप्रकारकोपस्थितावपि सादृश्यातिशयमहिम्ना ताद्रूप्यप्रत्यय इति भाव. । इदं प्रयोजन गौर्वाहीक इत्यत्र । गौरयमित्यत्र प्रयोजनं दर्शयति सर्वथैवेति । गोत्ववाहीकत्वयोर्भेदप्रतीति विनैवेत्यर्थः । वाहीकपदानुपादानेन वाच्यार्थबोधवेलायामपि शब्दजभेदकधर्मानुपस्थितेरिति भावः । अभेदावगमः अभेदप्रतीतिः । प्रयोजनं फलम्, व्यङ्ग्यं च भवतीति शेषः । शुद्धसारोपशुद्धसाध्यवसानयोः प्रयोजनं दर्शयति शुद्धभेदयोरिति । आयुर्घृतमित्यत्र अन्यवैलक्षण्येन जनकान्तरवैलक्षण्येन (क्षीरादिवैसादृश्येन) कार्यकारित्वम्, आयुरेवेदमित्यत्र घृतं क्षीरादिवत् आयुष्यं प्रति न व्यभिचरतीति अव्यभिचारेण नियमेन कार्यकारित्वम्, प्रयोजनमित्यनुषङ्गः ।

क्वचित् तादर्थ्यादुपचारः यथा इन्द्रार्था स्थूणा इन्द्रः, क्वचित् स्वस्वामिभावात् यथा राजकीयः पुरुषो राजा, क्वचित् अवयवावयविभावात् यथा अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः, क्वचित् तात्कर्म्यात् यथा अतक्षा तक्षा ॥

लक्षणा तेन षड्विधा ॥ १२ ॥

आद्यभेदाभ्यां सह ॥

---

कार्यकारणभावादीत्यादिपदग्राह्यसंबन्धानाह क्वचिदित्यादिना तक्षेत्यन्तेन । तादर्थ्यादिति । तस्मै इदं तदर्थम्, तदर्थस्य भावस्तादर्थ्यं तस्मात्, तादर्थ्यरूपसंबन्धादित्यर्थः, उपकार्योपकारकभावरूपसंबन्धादिति यावत् । उपचारो लक्षणेति कमलाकरः, उपचारो लक्षणया सामानाधिकरण्येन प्रयोग इति प्रभायां स्पष्टम् । तदुदाहरति यथेति। इन्द्रार्थेति । इन्द्रपूजाप्रयोजनिकेत्यर्थः । इन्द्रार्थेति संबन्धप्रकटनार्थं न तु लक्षणाकारे प्रदर्शनपरम्, स्थूणा इन्द्र इत्येतावतैव तत्प्रदर्शनसंभवात् । स्थूणा स्तम्भः । अत्रेष्टप्रदत्वं प्रयोजनं व्यङ्ग्यम् । राजेति । अत्रालंघनीयाज्ञत्वं प्रयोजनं व्यङ्ग्यम्। अग्रहस्त इति। अग्रं च तत् हस्तश्चेति कर्मधारयेऽग्रमात्रे हस्तशब्दो लाक्षणिकः । अत्र हस्तावयवेन हस्तव्यापारं करोतीति बलाधिक्यं प्रयोजनं व्यङ्ग्यम् । यदा तु हस्तस्याग्रमिति विग्रहस्तदा 'पीता कार्पटिकैर्गङ्गा' इत्युदाहार्यम्, अत्र गङ्गावयवे गङ्गापदं लाक्षणिकमिति ज्ञेयम् । अग्रमात्रे इति । अवयवपुञ्ज एवावयवीति मते अवयवान्तरव्युदासाय मात्रपदम् (१)। तात्कर्म्यात् । तत्कर्मकारित्वात् । अतक्षा गोपालादिः, अभ्यस्तगृहनिर्माणः । तक्षेति । इदं जातिविशेषावच्छिन्ने रूढम् । वर्धकिरित्यर्थः । अत्र तत्कर्मनिपुणत्वादिकं प्रयोजनं व्यङ्ग्यम् ॥

उपसंहरति लक्षणा तेनेति । तेन उक्तप्रकारेण । षड्विधेति । शुद्धागौणीसारोपासाध्यवसानोपादानलक्षणैः षड्विधेत्यर्थ इत्युद्द्योते स्पष्टम् । ननु 'स्वसिद्धये' इत्यादिना प्रभेदचतुष्टयमेवोक्तमतः कथं षड्विधेत्यत आह आद्यभेदाभ्यां सहेति । उपादानलक्षणालक्षणलक्षणाभ्यां सहेत्यर्थः । लक्षणा प्रथमतो द्विविधा शुद्धा गौणी च, शुद्धापि पुनश्चतुर्विधा, उपादानलक्षणा लक्षणलक्षणा सारोपा साध्यवसाना चेति, गौण्यपि सारोपा साध्यवसाना चेति द्विविधेति षड्विधेति (२) भावः । वस्तुतस्तु लक्षणा तावत् द्विविधा, शुद्धा गौणी च, तत्राद्या द्विविधा उपादानलक्षणा लक्षणलक्षणा च, उपादानलक्षणालक्षणलक्षणे अपि प्रत्येकं सारोपा साध्यवसाना चेति द्विविधे इति शुद्धाभेदाश्चत्वारः, गौणी

---

१ अवयव–मात्रपदम्–उद्द्यो० ॥ २ गौण्यपि– धेति– विव० ॥

न्वितस्वार्थबोधकत्वम् ”– इति व्युत्पत्तिसत्त्वेन पुत्रीत्यत्र स्त्रीप्रत्ययः किंगतं स्त्रीत्वमभिदध्यात् । न चापत्यपुत्रशब्दयोः पर्यायत्वाङ्गीकारे सापत्य इतिवत् सपुत्र इत्यतोऽपि कन्यापुत्रसंदेहापत्तिरिति वाच्यम्, पुंस्त्वतात्पर्यग्राहकस्य विसर्गस्य सत्त्वेन स्त्रीत्वतात्पर्यग्राहकस्य ईकारस्यासत्त्वेन च संदेहविरहात् । तस्मादपत्यशब्दस्य वंशायतनहेतुत्वरूपमेवापत्यत्वं शक्यतावच्छेदकम्, तदेव च पुत्रशब्दस्यापीति पर्यायतेत्याहुः । तन्न युक्तम्, तथा सति ( पुत्रशब्दस्यापत्यसामान्यार्थकत्वे सति ) द्वयोरप्यपत्यार्थकत्वाविशेषेण दोषस्यैवाप्रसङ्गात् (१) । तथा हि, अत्र हि दृष्टान्तानुरोधेन सामान्यविशेषभावेनापत्यप्रतीतिर्विवक्षिता, सा च शब्दभेदेऽप्युपपद्यते इति न दोषप्रसक्तिः, उद्देश्यप्रतिनिर्देश्यस्थले एवैकरूपताप्रतीत्यनुरोधेन शब्दभेदे दोषोपगमात्, इह च तदभावादिति । इदमत्र तत्त्वम्, उद्देश्यप्रतिनिर्देश्यस्थले एकरूपार्थप्रतीतिविघातो हि दूषकताबीजम्, अत एव गतेत्युपक्रम्य यातेत्युक्तौ दोष उक्तः । अत्र तु न तत् दूषकताबीजम्, किंतु दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् । पुत्रशब्दस्यापत्यपर्यायत्वे सामान्यविशेषभावेन प्रतीत्युपपत्तेर्दूषकताबीजाभावाददोषप्रसङ्ग इति । तस्मात्पर्यायत्वमेकार्थप्रतिपादकत्वमात्रम्, न त्वेकप्रकारकप्रतीतिजनकत्वमपीति बोध्यम् । अत एव (२) ‘विपदोऽभिभवन्ति’– इति पद्ये लघुतामुपक्रम्यागरीयानित्युक्तावपि पर्यायप्रक्रमभङ्गो वक्ष्यते । निरुक्तपर्यायत्वं सामान्यविशेषबोधकयोरप्यक्षतमेव । एवं च चूतशब्दस्य विशेषवाचिनः सामान्यपर्यायप्रस्तावे दार्ष्टान्तिके विशेषपर्यायोपादानात्पर्यायप्रक्रमभङ्गः । यदि तु पुत्रापत्यशब्दयोरेकप्रकारकप्रतीतिजनकत्वरूपं पर्यायत्वं स्वीक्रियेत तदोपक्रमानुरोधेनोपसंहारस्य नेतुमुचितत्वात् “तस्यां हि पुत्र्याम्”– इति युक्तः पाठ इत्येव वृत्तिकृतो ब्रूयुरित्यलमिति प्रदीपोद्द्योतादौ स्पष्टम् ।

विस्तारिकायां तु, अथ कथमपत्यपुत्रयोः पर्यायता, जन्यप्राणित्वेन जन्यपुंस्त्वेन च शक्यतावच्छेदकभेदात् । अत्र केचित्, पुत्रश्च दुहिता चेत्येकशेषेण पुत्रपदस्य कन्यापुत्रोभयबोधकतयाऽपत्यपर्यायतेत्याहुः, तन्न, जन्यप्राणित्वस्य जन्यस्त्रीपुंस्त्वाभ्यामन्यत्वेन प्रकारभेदादपर्यायत्वात् । न च विषयमात्रैक्येनात्र पर्यायता, पण्डस्यापत्यत्वेन तदैक्यवि-

---

१ दोषस्यैवाप्रसङ्गादिति । पर्यायत्वेऽपि येन पर्यायेण प्रक्रमस्तद्भिन्नेनोपसंहारेऽपि दोषात्कथमन्यथा गतेत्युपक्रम्य यातेत्युक्तौ दोष इति चिन्त्यमेतदिति केचित्तन्न, एकरूपार्थप्रतीतिविघातो हि तत्र दूषकताबीजम्, न चात्र तत्, किंतु दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् । तथा हि, पुष्पसामान्यसत्ताया पुष्पविशेषादरबोधकेन दृष्टान्तेन यत्सामान्यसत्ता तद्विशेषगोचरेच्छेति प्रस्ताव, एवं च दार्ष्टान्तिकेऽपि अपत्यसत्तायामपि अपत्यविशेषे स स्नेह इत्येवापेक्षितम्, पुत्रशब्दस्य तत्पर्यायत्वे सामान्यविशेषभावेन प्रतीत्युपपत्तेस्तद्बीजाभावाददोषप्रसङ्ग इत्याशयादित्युद्द्योतेऽपि स्पष्टम् ॥ २ उक्तपर्यायत्वोपगमादेव । विपद इत्यादौ कारणमालाया पूर्वविहितविपदादेरुत्तरत्रानुवाद्यत्वादुद्देश्यप्रतिनिर्देश्यभाव इति शब्दभेदे पूर्वस्योत्तरत्र हेतुत्वप्रतीतेः स्थगन दोष इति ज्ञेयम् । अगरीय. पदं हि गुरुत्वाभाववत्त्वेन बोधकम् ॥

विपदोऽभिभवन्त्यविक्रमं, रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥

अत्रोपसर्गस्य पर्यायस्य च । ( तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिः, लघुतावान्न पदं नृपश्रिय इति युक्तम् । )

---

रहाद् । न च पण्ढेषु नापत्यता तेषां सन्तत्यनारम्भकत्वेन पतति वंशो येन तत्पत्य न पत्यमपत्यमिति व्युत्पत्तिविरहादिति वाच्यम्, तेष्वपि प्रयोगेणाजन्मानुद्भूतार्थस्यापत्यत्वेन च व्युत्पत्तेरप्रयोजकत्वात् । घटो द्रव्यमित्यत्रापि पर्यायतापाताच्च । तत्रापि विपर्ययस्यानपायादिति व्याख्यातम् ॥

उपसर्गपर्याययोः प्रक्रमभङ्गमेकत्रोदाहरति विपद इति । किरातार्जुनीये द्वितीयसर्गे युधिष्ठिरं प्रति भीमसेनस्योक्तिरियम् । यत्तु चन्द्रिकोद्द्योतयोरुक्तं 'द्रौपद्या उक्तिरियम्'– इति, तत्तु अनवलोकनमूलकमेव । विपदः विपत्तयः अविक्रमं पराक्रमरहितं (कातरं) जनम् अभिभवन्ति तिरस्कुर्वन्ति । आयतिः उत्तरकालशुद्धिः आपदा आपत्त्या उपेतं युक्तं जनं रहयति त्यजति, शुभोदर्को न भवतीति भावः । निरायतेः आयतिरहितस्य जनस्य लघुता नीचता नियता अवश्यं भाविनी । अगरीयान् गौरवहीनः (लघुः) जनः नृपश्रियः राजलक्ष्म्याः पदं स्थानं न भवतीत्यर्थः । तस्मात्पौरुषं कर्तव्यमेवेति भावः । नृपेति युधिष्ठिरसम्बोधनमिति केचित् । अत्र पूर्वपूर्वस्याविक्रमत्वाद्विपदादिकं प्रति कारणत्वात्कारणमालाख्योऽलङ्कारः । सुन्दरी छन्दः । "अयुजोर्यदि सौ जगौ युजो सभरा ल्गौ यदि सुन्दरी तदा"– इति लक्षणात् ।

अत्र विपद इति व्युपसर्गमुपक्रम्य आपदुपेतमिति आङ् उपादानादुपसर्गस्य प्रक्रमभङ्गः, लघुतेत्युपक्रम्य अगरीयानिति पर्यायान्तरोपादानात्पर्यायस्य प्रक्रमभङ्गश्च । तदाह अत्रोपसर्गस्य पर्यायस्य चेति । प्रक्रमभङ्ग इति शेषः । आपदित्युपसर्गस्य प्रक्रमभङ्गः, अगरीयानिति पर्यायस्य च प्रक्रमभङ्ग इत्यर्थः । द्वितीयादिपादत्रये युक्तं पाठमुपदिशति तदिति । तस्मादित्यर्थः । अस्य 'युक्तम्'– इत्यग्रिमेणान्वयः । युक्तोऽस्मीन । छन्दोदोषपरिजिहीर्षयैव कल्पितेऽस्मिन् पाठे छन्दोभङ्गो न दोषाय, निर्दोषवाक्यमात्रसमर्पकत्वादस्येति बोध्यम् । अत एव काव्यप्रदीपे उक्तं "तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिः, लघुताभागपदं नृपश्रियः"– इति पाठो युक्तो यदि न छन्दोभङ्ग इति ॥

काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मीः,
अश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यः शशंसुः ॥

अत्र वचनस्य । (काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निः-श्रीका इति, कम्पमाना इत्यत्र कम्पमापुरिति च पठनीयम् ।)

---

वचनस्य प्रक्रमभङ्गमुदाहरति काचिदिति । हे राजन् नार्यः स्त्रियः पार्थिवानां त्वद्द्विषां राज्ञां प्रस्थाने यात्रायां (युद्धनिर्याणे) पुरोऽग्रे भावि उत्पत्स्यमानम् अशिवम् अमङ्गलम् इति अनेन प्रकारेण शशंसुः प्रकटयामासुः । केन प्रकारेणेत्याकाङ्क्षायामाह काचिदित्यादि । काचित् नायिका रजोभिः आर्तवैः कीर्णा व्याप्ता (रजस्वला) अतएव मन्दा वक्त्रेन्दोर्मुखचन्द्रस्य लक्ष्मीः शोभा यस्यास्तादृशी सती दिवम् आकाशम् अनुविदधौ अनुकृतवती । द्यौरपि रजोभिः (पांसुभिः) कीर्णा, मन्दवक्त्रसदृशचन्द्रशोभा जाता; सकल-नृपक्षयरूपोत्पातसूचकत्वादिति भावः । केचित्तु, पतिवियोगदुःखेन भूमिपतनात्पांसुभिः कीर्णेति नायिकापक्षे व्याचख्युः । उद्भ्रान्तं व्याकुलीभूतं सत्त्वं सत्त्वगुणो यद्वा, सत्त्वं चित्तं यासां तथाभूताः काश्चित् नायिकाः अश्रीकाः शोभाहीनाः सत्यः दिश इव अन्तः दाहं तापं दधिरे । दिशोऽपि तत्कालम् उद्भ्रान्ता इतस्ततो विक्षिप्ताः सत्त्वाः प्राणिनो यासु तथाभूताः सत्योऽन्तः दाहं हेतुलक्षणया वह्निं दधुः । दिग्दाहस्याप्यमङ्गलसूचकत्वा-दिति भावः । "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वे व्यवसाये च चित्ते प्राणिषु जन्तुषु ॥"—इति विश्वः । अन्याः नायिकाः वात्याः वातसमूहा इव प्रतिपदं भ्रेमुः भ्रमणं चक्रुः । तत्काले वात्या अपि जाता इति भावः । अपराः नायिकाः भूमिवत् क-म्पमानाः कम्पयुक्ताः जाताः । तत्काले भूकम्पोऽपि जात इति भावः । वात्याभ्रमणभूकम्पयो-रशुभसूचकत्वं प्रसिद्धमेव । स्रग्धरा छन्दः । लक्षणमुक्तं प्राक् (११३ पृष्ठे) ।

अत्र काचिदित्येकवचनमुपक्रम्य काश्चिदिति बहुवचनोपादानाद्वचनस्य प्रक्रमभङ्गः । तदेवाह अत्र वचनस्येति । प्रक्रमभङ्ग इति शेषः । युक्तं पाठमुपदिशति काश्चिदि-त्यादि । प्रसङ्गादाख्यातप्रक्रमभङ्गमपि पाठान्तरेण परिहरति कम्पमाना इत्यत्रेत्यादि । इति च पठनीयमिति । अन्यथा 'अनुविदधौ दधिरे'—इत्यादि क्रियाप्रधानं तिङन्त-मुपक्रम्य द्रव्यप्रधानस्य कम्पमाना इत्यस्य शानजन्तस्योपादानादाख्यातप्रक्रमभङ्गः स्यादिति भावः । व्याख्यातं च प्रदीपोद्द्योतयोरपि, कम्पमाना इति च कम्पमापुरिति पठनीयम्, शतृशानचोर्गुणीभूतक्रियान्तराभिधायकत्वनियमात् । नचात्र क्रियान्तरं प्र-

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम् ।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले,
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

अत्र कारकस्य । ( विश्रब्धा रचयतु शूकरावरा मुस्ताक्षतिमित्यदुष्टम् । )

---

धानमस्तीति इति प्रदीपः । गुणीभूतक्रियान्तरेति । क्रियान्तरं प्रति गुणीभूतस्वार्थाभिधायकत्वादित्यर्थस्तदाह प्रधानमस्तीति । आख्यातप्रक्रमभङ्गप्रसङ्गाच्चेत्यपि बोध्यमित्युद्द्योतः । उक्तं च निरुक्ते यास्केनापि " भावप्रधानमाख्यात सत्वप्रधानानि नामानि " इति । भावोऽत्र क्रिया, सत्वमत्र द्रव्यमिति बोध्यम् ॥

कारकस्य प्रक्रमभङ्गमुदाहरति गाहन्तामिति । शाकुन्तलनाटके द्वितीयाङ्के महर्षेः कण्वस्याश्रमे शकुन्तलादर्शनान्निवृत्तमृगयाभिलापस्य राज्ञो दुष्यन्तस्य सेनापतिं प्रत्युक्तिरियम् । तत्र"अद्य तावत्"इति उपक्रमस्थं सर्ववाक्यान्वयि । महिषा अरण्यमहिषाः शृङ्गैः विषाणैः मुहुः वारंवारं ताडितम् आहतम् उत्फालित वा निपानस्य कूपसमीपवर्तिक्षुद्रजलाशयस्य सलिलं जलं गाहन्तां विलोडन कुर्वताम् । त्रासापगमेन प्रकृतिस्वाच्छन्द्याच्छृङ्गैः सलिलमूर्ध्वं क्षिप्त्वा शरीरोपरि पातयन्त्विति भाव. । अत्रस्वभावोक्त्यलंकारः । एवमग्रिमवाक्ययोरपि बोध्यम् । एतेन हननयोग्यदेशस्थितानपि न हनिष्ये इति स्वोदात्तता ध्वनिता । एवं सर्वत्र । तथा, मृगकुलं हरिणकुलं छायायां बद्धं कदम्बकं समूहो येन तादृशं सत् रोमन्थम् अभ्यवहृतस्याकृष्य चर्वणम् अभ्यस्यताम्. त्रासात्पलायनपरतयाऽन्योन्यवार्तानभिज्ञं विस्मृतरोमन्थं चाधुना त्रासापगमे सति सभूय शिलाक्रमेण रोमन्थाभ्यासं कुरुतामित्यर्थः । कदम्बानां बहुत्वात्कुलस्यान्यपदार्थत्वोपपत्ति. । एवम्. वराहपतिभिः सूकरश्रेष्ठै. विश्रब्धैः विश्वस्तैः सद्भिः पल्वले अल्पसरसि मुस्ताया' तृणविशेषस्य क्षतिर्नाशः उत्खननं वा क्रियताम् । " पल्वल चाल्पसरो वापी तु दीर्घिका"– इत्यमर । विश्रब्धैरिति विभक्तिविपरिणामेन सर्वत्र योज्यम् । 'विश्रब्धं क्रियता वराहततिभि '– इति पाठे वराहसमूहैः विस्रब्धं विश्वासयुक्तं यथा स्यात्तथेत्यर्थ । तथा, इदं नानाविधवनचरसेनाविनाशकम् अस्मद्धनुः शिथिलो ज्याबन्धो मौर्वीबन्धनं यस्य तथाभूत सत् विश्रान्तिं विश्रामं लभतामित्यर्थः । शार्दूलविक्रीडितं छन्दः । लक्षणमुक्तं प्राक् ( ९ पृष्ठे ) ।

अत्र गाहन्तामिति कर्तृकारकवाचकतिङः प्रक्रमे क्रियतामिति कर्मकारकवाचकस्योपादानात्कारकप्रक्रमभङ्ग· । तदेवाह अत्र कारकस्येति । प्रक्रमभङ्ग इति शेष. । शुद्धं पाठमुपदिशति विश्रब्धा इति । शूकरवरा इति । शूकरपदस्य ग्राम्यत्वाद्वन्यशेभिन्याद्य

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिगच्छति।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च॥

अत्र क्रमस्य। पादोपसंग्रहणायेति पूर्वं वाच्यम्। एवमन्यदप्यनुसर्तव्यम्॥

---

'विश्रब्धः कुरुतां वराहनिवहो मुस्ताक्षतिम्'— इति युक्तं पठितुम्। एवं चात्मनेपदप्रक्रमभङ्गोऽपि नेत्युद्द्योते स्पष्टम्॥

क्रमस्य प्रक्रमभङ्गमुदाहरति अकलितेति। वीरचरितनाटके द्वितीयाङ्के धनुर्भङ्गकुपिते भार्गवे (परशुरामे) आगते श्रीरामस्योक्तिरियम्। अकलितम् अपरिमितं यत्तपस्तेजो वीर्यं च ताभ्यां प्रथिमा पृथुता यत्र तथाभूते, यद्वा, अकलितोऽपरिमितस्तपस्तेजसो ब्रह्मचर्यादितेजसो वीर्यस्य प्रभावस्य च प्रथिमा विस्तारो महिमा वा यस्य तथाभूते, यशोनिधौ परमप्रसिद्धे, अवितथो यथार्थो यो मदः अहंकारस्तेन आध्माते उद्दीपिते, यद्वा, तादृशाहंकारविशिष्टे, मुनौ परशुरामे रोषात् क्रोधात् अभिगच्छति अभ्यागते सति 'अभिधावति'—इति पाठे संमुखं धावमाने सति पाणिः मद्धस्तः अभिनवाऽलौकिका उपस्थिता च या धनुर्विद्या तया यो दर्पो गर्वस्तस्य क्षमाय योग्याय कर्मणे बाणाकर्षणरूपाय (१) च पादयोरुपसंग्रहणाय ग्रहणाय (२) च रभसात् आवेगात् स्फुरति चेष्टते इत्यर्थः। चकारद्वयेन तुल्यकालत्वाभिव्यक्तिः। यशोनिधावित्यनेन तादृशस्य जयादुत्कर्षाधिक्यं ध्वनितम्। हरिणी छन्दः। लक्षणमुक्तं प्राक् (११२ पृष्ठे)।

अत्र क्रमस्येत्यादि। अत्र प्रथमद्वितीयपादार्थौ यथाक्रमं पादग्रहणबाणाकर्षणयोर्हेतू इति तन्निर्देशक्रमेणैव निर्देशो युक्तः, तदन्यथात्वेन क्रमप्रक्रमभङ्ग इति भाव इति केचित्। अत्र तपस्तेजोवीर्ये क्रमेणोपक्रम्य तदुभयोचितयोः पादग्रहणबाणाकर्षणयोः पौर्वापर्यं योग्यम्, "यथासंख्यमनुदेशः समानाम्"— इति न्यायात्, तदन्यथाकरणेन क्रमप्रक्रमभङ्ग इति भावः। यत्तु प्रदीपकारैरुक्तं 'तेजोवीर्य-रोषौ क्रमेणोपक्रम्य'—इति, तदयुक्तमिति ध्येयं दक्षैरिति सुधासागरे स्पष्टम्। अत एवोक्तमुद्द्योतेऽपि 'अत्र तपस्तेजोवीर्ये क्रमेण'—इति पाठ इति। **पूर्वमिति**। 'अभिनवधनुर्विद्यादर्पक्षमाय'— इत्यतः पूर्वमित्यर्थः। **एवमन्यदपीति**। 'शशी दिवसधूसरो गलितयौवना कामिनी' (३)—इत्यादौ शोभनत्वेन प्रतीतस्य धूसरत्वादिनाऽशोभनत्वमिति विवक्षितः क्रमस्तस्य द्वितीयचतुर्थपष्टवाक्येष्वन्यथात्वेन भङ्ग इत्यादि सुधीभिरूह्यमिति भावः।

---

१ युद्धरूपायेति यावत्॥ २ वन्दनायेति यावत्॥ ३ इदं पद्यं दशमोल्लासे समुच्चयालकारे मूले एवोदाहृतम्॥

अविद्यमानः क्रमो यत्र, यथा,

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतः, त्वमस्य लोकस्य च नेत्रकौमुदी ॥

अत्र त्वंशब्दानन्तरं चकारो युक्तः ।

---

अत्र सर्वत्र ( १ ) एकरूपप्रमृतायाः प्रतीतेः स्थगनमुपघातो वा दूषकताबीजम् । ग-द्युक्तम्, "प्रक्रमस्यान्यथात्वेन प्रतीतौ प्रस्खलद्गतौ । ह्लादः स्फुरन्ननास्वादो यत्र ग्लानत्वमश्नुते । दोषः प्रक्रमभेदाख्यः शब्दानौचित्यभूश्च सः ।"— इति । अत एव नित्यदोषोऽयमिति प्रदीपे स्पष्टम् ॥

अक्रमं व्याचष्टे अविद्यमान इत्यादि । यत्रेति । यस्मिन्वाक्ये इत्यर्थः । तदक्रममिति शेषः । यत्पदानन्तरं यत्पदोपादानमुचितं ततोऽन्यत्र तदुपादानं यत्र तत् अक्रममित्यर्थः । यस्य यदव्यवहितपूर्वत्वनियमेन यदव्यवहितपरत्वनियमेन वा विवक्षितार्थानुभावकत्वं तस्य तत्परिहारेणान्यत्र स्थितत्वमक्रमत्वमिति भावः । एवं चायं दोषो निपातविषयः । यथा, उपसर्गाणां धातोः पूर्वमेव प्रयोगः ( २ ), एवेत्यादीनां व्यवच्छेद्यानन्तरम्, पुनरादीनां व्यतिरेच्यानन्तरम्, इवादीनामुपमानादनन्तरम्, एवं च 'उद्बाहुरिव वामनः ( ३ )'— इत्यादावप्ययमेव दोषः, चादीनां समुच्चेयादनन्तरमित्यादि बोध्यमित्युद्द्योते स्पष्टम् । पदसंनिवेशरूपरचनायाः प्रस्तुतार्थप्रत्यायकत्वेऽक्रमत्वम्, प्रत्यायकत्वेऽप्यनौचित्येऽस्थानपदता, अर्थक्रमस्यानौचित्ये तु दुष्क्रमत्वम्, उपक्रमोक्तक्रमस्योपसंहारे भङ्गे प्रक्रमभङ्ग इत्येतेषां भेद इति विवरणे स्पष्टम् ।

द्वयमिति । व्याख्यातमिदं पञ्चमोल्लासे ( २१२ पृष्ठे ), अस्मिन्नप्युल्लासे ( २१६ पृष्ठे ) इति बोध्यम् । अत्रेत्यादि । अत्र लोकस्य चेति चकारस्त्वंशब्दानन्तरं युक्तः, त्वच्छब्दार्थस्यैव शोच्यतायां समुच्चयस्य द्योतनीयत्वात्; लोकपदार्थे समुच्चयाभावादिति भावः । एवं च त्वं चेति पाठक्रमो युक्तस्तदभावादक्रमत्वम् ।

---

१ अत्र सर्वत्रेति । तथाहि, उद्देश्यप्रतिनिर्देश्यस्थले ( ४१४ पृष्ठे ) तावदेकरूपताप्रतीतिर्विवक्षितैव, [illegible]-ऽधिगन्तुमित्यादावपि ( ४१७ पृष्ठे ) यत्र प्रभृते [illegible] ( ४१८ पृष्ठे ) अपत्यत्वेनैक्य दृष्टान्तवशादिष्टम्, काचित्कीर्णेत्यत्रापि ( ४२२ पृष्ठे ) [illegible], गाहन्तामित्यत्रापि ( ४२३ पृष्ठे ) तत्तत्क्रियाकर्तृत्वेनैकरूपेणैव [illegible], अकलिते निषयेऽपि ( ४२४ पृष्ठे ) यथासंख्यन्यायेन [illegible], तुमुनादौ च तादृशप्रतीतेः स्थगनं विलम्बितत्वम्, पुत्रवतोऽपीत्यादौ [illegible] द्रष्टव्यमिति प्रभायां स्पष्टम् । उद्द्योतकारास्तु, स्थगनमित्यत्र [illegible] पठित्वा [illegible] उपघातश्चमत्कारापकर्ष इत्याहुः ॥ २ "ते प्राग्धातोः" ( १।४।८० )— [illegible] ॥
३ वामन इव उद्बाहुरित्यन्वयः ॥

**यथा वा,**

**शक्तिर्निस्त्रिंशजेयं तव भुजयुगले, नाथ! दोपाकरश्री-**
**र्वक्त्रे, पार्श्वे तथैपा प्रतिवसति महाकुट्टनी खड्गयष्टिः ।**
**आज्ञेयं सर्वगा ते विलसति च पुरः, किं मया वृद्धया ते,**
**प्रोच्येवेत्थं, प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥**

---

अथापदस्थपदादस्य को भेदः, तत्र प्रतीत्यन्तरमत्र सैव प्रतीतिः किं तु विलम्बितेति केचित् । तन्न । 'कुटिलाताम्रच्छविः'— इत्युदाहृते (४०८ पृष्ठे) अपदस्थपदे प्रतीत्यन्तराभावात् । वयं तु ब्रूमः, अव्यवधानेनैव (१) यत्राभिमतप्रतीतिजननसामर्थ्यं तदेतस्य विषयः, अन्यः पुनरितरस्य । चादीनां चाव्यवहितपदार्थेष्वेव समुच्चयादिद्योतकता । यदुक्तं महिमभट्टेन, "अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः । संबन्धं, ते हि स्वां शक्तिम् (२) उपदध्युरनन्तरे ॥"— इति । न च नञोऽप्यव्यवहितस्यैव (३) तथात्वम्, अतः 'स्रजं न काचिद्विजहौ' (४०६ पृष्ठे)— इत्यादिकमप्यक्रमभेदः स्यादिति वाच्यम्, 'न खलु न खलु बाणः संनिपात्योऽयमस्मिन् (४)'— इत्यादौ व्यवधानेऽपि प्रतीतिविशेषाभावात् (५) इति प्रदीपः ॥

न चायं चादिपदेष्वेव दोषः, किं त्वित्थमादिष्वपीत्याशयेनोदाहरणान्तरमाह **यथा वेति । शक्तिरिति ।** यस्य राज्ञः शशिकरसितया चन्द्रकिरणधवलया कीर्त्या प्रकोपात् इत्थम् अनेन प्रकारेण प्रोच्येव उक्त्वेव प्रयातं प्रकर्षेण गतं (दूरं गतं) पलायितं चेत्यर्थः । अत्र स्त्रीलिङ्गेन कीर्तौ पत्नीत्वाध्यवसायो बोध्यः । एवं शक्त्यादेरप्यसन्नायिकात्वेनाध्यवसानम् । कथमुक्त्वेत्यपेक्षायामाह शक्तिरित्यादि । हे नाथ तव भुजयुगले बाहुयुग्मे इयं प्रत्यक्षा निस्त्रिंशजा निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः (६) खड्गः, त्रिंशद्भ्यो निर्गताः निस्त्रिंशाः त्रिंशदधिकाश्च तज्जा तदुत्पन्ना; एवं च नानापितृजन्या वेश्यापुत्रीत्वाद्वेश्येति फलितम्, यद्वा "निस्त्रिंशो निर्घृणे खड्गे"— इति हेमचन्द्रकोशात् निस्त्रिंशः खलः तज्जा तदुत्पन्नेत्यर्थः, एवं च खलजन्यायाः खलस्वभावत्वादसतीति फलितम्, एतादृशी शक्तिः सामर्थ्यं 'प्रतिवसति'—इत्यग्रेतनेनान्वयः । तथा, तव वक्त्रे दोषाकरस्य

---

१ अव्यवधानेनैवेति । प्रयुक्ते इति शेषः ॥ २ स्वां शक्तिमिति । स्वार्थाभिधानसामर्थ्यरूपामित्यर्थः । अनन्तरे अव्यवहितपदार्थे । उपदध्युः व्यवस्थापयेयुः । तदन्वितस्वार्थबोधका इत्यर्थः ॥ ३ अव्यवहितस्येति । प्रतियोगिवाचकपदाव्यवहितस्येत्यर्थः ॥ ४ शाकुन्तलनाटके प्रथमाङ्के इदम् ॥ ५ प्रतीतिविशेषाभावादिति । प्रतीतौ विशेषस्य विलम्बितत्वादिरूपस्याभावादित्यर्थ इत्युद्द्योतप्रभयोः स्पष्टम् ॥ ६ "निरादयः क्रान्ताद्यर्थे पञ्चम्या"— इत्यनेन तत्पुरुषसमासः, "संख्यायास्तत्पुरुषस्य"—इति टच् । "बहुव्रीहौ संख्येये" इति डजिति केचित्तन्न, बहुव्रीहित्वाभावात् ॥

अत्र इत्थं प्रोच्येवेति न्याय्यम् । तथा, लग्नं रागावृताङ्ग्येत्यादौ इति श्रीनियोगादिति वाच्यम् ॥

अमतः प्रकृतविरुद्धः परार्थो यत्र, यथा,

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥

---

चन्द्रस्य दोषाणामाकरस्य महामूर्खस्य च श्रीः शोभा, यद्वा, दोषाकरा दूषणाश्रया श्रीः शोभा प्रतिवसति । तथा, तव पार्श्वे प्रदेशे एषा प्रत्यक्षा महती चासौ कुट्टयति छिनत्तीति कुट्टनी (१) छेदिका शम्भली च (परस्त्रीपुरुषादिसंघटनकर्त्री च) खड्गयष्टिः प्रतिवसति । अनेनात्यन्तं परवनितासक्त इति व्यज्यते । तथा, सर्वगा सर्वगामिनी सर्वजनग्राह्येति यावत्, सर्वोपभोग्या च कुलटेति यावत् । ईदृशी इयं ते तव आज्ञा ते तव पुरः पुरतः विलसति, 'प्रसरति'— इति पाठे इतस्ततः संचरमाणा तिष्ठतीत्यर्थः । ईदृशस्य दुर्वृत्तस्य ते तव मया वृद्धया महत्या जरत्या च किं किं प्रयोजनमितीत्थमुक्त्वेति योज्यम् । स्रग्धरा छन्दः । लक्षणमुक्तं प्राक् ( ११२ पृष्ठे ) ।

अत्रेत्थमित्यादि । अत्रेत्थं प्रोच्येवेति वक्तुं योग्यम्, इत्थंशब्दस्याव्यवहितपूर्वपरामर्शकत्वात्, पादत्रयस्यैव च परामर्शनीयत्वान्न तु वचनस्येत्यर्थः । एवं च तदन्यथाकरणादक्रमत्वमिति भावः । एवं 'लग्नं रागावृताङ्ग्या'— इति गर्भितस्योदाहरणत्वेन प्रदर्शितेऽपि ( ४११ पृष्ठे ) पद्येऽक्रमदोषं प्रकटयति तथेति । इतिश्रीनियोगादिति । इतिशब्दस्याप्यव्यवहितपूर्वपरामर्शकत्वादिति भावः । अत्र दूषकताबीजं चोद्देश्यप्रतीतिविरह इति नित्यदोषोऽयम् । उद्देश्यप्रतीतिविरहश्चाकाङ्क्षाविरहादासत्तिविरहादपि वा बोध्यः । आद्यो यथा, शक्तिरित्यत्र । अन्त्यो लग्नमित्यत्रेति प्रदीपोद्द्योतयोः स्पष्टम् ॥

अमतपरार्थं व्याचष्टे अमत इति । अमतः प्रकृतविरुद्धः ( प्राकरणिकरसादिप्रतिकूलः ) परार्थो द्वितीयार्थो ( रसादिरूपव्यङ्ग्यार्थो ) यत्र ( वाक्ये ) तदित्यर्थः । परार्थो न तु वाच्यार्थ इति प्रतिकूलविभावादिग्रहाद्भेदः । अत एव प्रदीपकारा व्याचख्युः, अमतत्वं च "ज्ञेयौ शृङ्गारबीभत्सौ, तथा वीरभयानकौ । रौद्राद्भुतौ, तथा हास्यकरुणौ वैरिणौ मिथः ॥"— इत्युक्तदिशा प्रकृतरसविरुद्धरसव्यञ्जकत्वमिति ।

उदाहरति रामेति । रघुवंशे एकादशसर्गे श्रीरामेण हतायास्ताटकाया वर्णनमिदम् । दुःसहेन असह्येन रामो मन्मथ इव, पक्षे राम एव मन्मथो मदनस्तस्य शरेण बाणेन हृदये उरसि मनसि च ताडिता, अत एव गन्धवत् गन्धयुक्तं रुधिरचन्दनं रुधिरमेव

---

१ कुट छेदने इति धातोर्ल्युट्, टित्वान्ङीप् ॥

अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ॥

अर्थदोषानाह,

**अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥ ५५ ॥**
**संदिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।**
**अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ॥ ५६ ॥**
**साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।**
**विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥ ५७ ॥**

दुष्ट इति संबध्यते ।

---

चन्दनं रक्तचन्दनं च तेन उक्षिता सिक्ता ( कृताङ्गरागा ) सा प्रस्तुता निशाचरी राक्षसी (ताटका) निशायां चरति निशाचरी अभिसारिका च जीवितेशस्य यमस्य प्राणनाथस्य च वसति गृहं सुरतस्थानं च जगामेत्यर्थः । गन्धवत्त्वं रक्तस्य रघुनाथशरसंबन्धेन पापक्षयात्पूतनाधूमवदिति बोध्यम् । रथोद्धता छन्दः । लक्षणमुक्तं प्राक् ( १२९ पृष्ठे ) ।

अत्रेत्यादि । अत्र प्रकृतस्य बीभत्सरसस्य विरोधी शृङ्गारः, तस्य व्यञ्जको द्वितीयोऽर्थः । तादृशार्थोपस्थित्या प्रकृतबीभत्सरसापकर्षकताऽस्य दोषत्वबीजम्, अतो नित्योऽयं दोषः, नीरसे स्वात्मलाभस्यैवाभावादिति भावः । एषु वाक्यदोषेषु न्यूनपदकथितपदाभवन्मतयोगाविमृष्टविधेयांशास्थानस्थपदाक्रमाः काव्याकाव्यसाधारणाः । केचित्तु, अनभिहितवाच्यस्य न्यूनपदेऽक्रमस्यापदस्थपदेऽन्तर्भावः शक्यः, एवमर्थान्तरैकवाचकसंकीर्णगर्भितानामप्यपदस्थपदतैव, अल्पान्तरेण दोषान्तरत्वेऽतिप्रसङ्गादित्याहुरिति प्रदीपोद्द्योतयोः स्पष्टम् ॥

इत्थं शब्ददोषानभिधायेदानीं त्रयोविंशतिमर्थदोषानाह अर्थदोषानाहेति । अथार्थदोषलक्षणान्याहेत्यर्थः । अर्थस्य शब्दायत्तत्वाच्छब्ददोषलक्षणकथनानन्तरमेवार्थदोषलक्षणकथनस्यौचित्यादिति भावः । अत एवाहुः सारबोधिनीकाराः, संप्रति वाक्यार्थप्रतीतिपश्चाद्भावित्वेन वाक्यदोषानन्तरमर्थदोषानाहेति । अर्थोऽपुष्ट इति । व्याहतश्च पुनरुक्तश्च दुष्क्रमश्च ग्राम्यश्चेति दोषचतुष्टयम् । प्रसिद्धिविरुद्धो विद्याविरुद्धश्चेति दोषद्वयम् । सनियमपरिवृत्तोऽनियमपरिवृत्तो विशेषपरिवृत्तोऽविशेषपरिवृत्तश्चेति दोषचतुष्टयम् । विध्ययुक्तोऽनुवादायुक्तश्चेति दोषद्वयम् । एतेषां स्वरूपं तत्तदुदाहरणावसरे स्फुटीभविष्यति । दुष्ट इतीति । " दुष्टं पदम् " ( २९६ पृष्ठे )– इति पददोषलक्षणसूत्रस्थं दुष्टमिति पदं लिङ्गविपरिणामेन संबध्यते इति भावः ।

क्रमेणोदाहरणम्,

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥

अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टाः न त्वसंगताः पुनरुक्ता वा ॥

---

तत्रापुष्टः पुष्टाद्भिन्नः। पुष्टत्वं च विवक्षितार्थबाधप्रयोजकानुपादानकत्वम्। यस्यार्थस्यानुपादाने (शब्देनाप्रतिपादने) विवक्षितार्थस्य बाधः (असिद्धि) तत्त्वं पुष्टत्वमित्यर्थः। तद्विरहश्च द्विधा, अप्रयोजकत्वात् (१) प्रयोजकत्वेऽप्यन्यलभ्यत्वाच्च (२)। येमेनं "व्यर्थमाहुर्गतार्थं यत्, यच्च स्यान्निष्प्रयोजनम्"—इत्यनेन भोजराजोपि व्यर्थमाह (३)। अत एव (४) वृत्तिकारोऽपि "अतिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्ते"—इत्येवाह, न त्वप्रयोजका एवेतीति प्रदीपादौ स्पष्टम्।

अपुष्टमुदाहरति अतिविततेति। रविः जयति सर्वोत्कर्षेण वर्तते। कीदृशः?—अतिविततम् अत्यन्तदीर्घं यत् गगनम् आकाशस्तद्रूपा या सरणिः मार्गस्तत्र प्रसरणे गमनागमने परिमुक्तः परित्यक्तो विश्रामानन्दो विश्रान्तिजं सुखं येन तादृशः। तथा, मरुद्भिः उल्लासितं प्रकाशितं प्रसारितं वा (दिक्षु सचारितं वा) सौरभं सौगन्ध्यं यस्य तथाभूतस्य कमलाकरस्य पद्माकरस्य हासकृत् विकासकर्तेत्यर्थः। गीतिश्छन्दः। लक्षणमुक्तं प्राक् (२ पृष्ठे)।

अत्रातिविततत्व—सरणित्व—मरुदुल्लासितसौरभत्वरूपाणामर्थानामनुपादानेऽपि प्रकृतार्थस्याक्षतेरपुष्टार्थत्वम्। तदेवाह अत्रातिविततेत्यादि। अत्रातिविततत्वादयोऽर्था अनुपादानेऽपि शब्देनाप्रतिपादनेऽपि प्रतिपाद्यमानमर्थं विवक्षितमर्थं न बाधन्ते न क्षीणयन्तीत्यपुष्टा इत्यर्थः। अयं भावः, अत्रातिवितते निरवलम्बे व्योम्नि अविश्रामं गमनागमनात् इतराप्रकाश्यकमलप्रकाशनाच्च रवेरुत्कर्षो विवक्षितः। तत्रातिविततत्वं गगनस्यार्थादेव गम्यते, अग्नेरिवौष्ण्यम्। सरणित्वं मरुदुल्लासितसौरभत्वं चाप्रयोजकमेवेत्यपुष्टा एतेऽर्था इतीति प्रदीपे स्पष्टम्। अत्रातिविततत्वं दीर्घत्वं न तु विस्तृतत्वम्, न हि विस्तीर्णपथप्रचारः श्रमहेतुरिति बोध्यम्। निरवलम्बत्वोपादानं दृष्टान्तार्थम्। अत्रानन्दपदमप्यपुष्टम्। एवं कमलाकरेत्यत्राकरपदमपि व्यर्थमित्युद्द्योते स्पष्टम्। नन्विदमधिकपदत्वं पुनरुक्तं वा स्यादित्यत आह नत्वित्यादि। असङ्गताः अधिकाः। प्रयोजनान्तराभावादर्था-विवक्षायामपि तत्पदाभिधानेऽधिकपदत्वम्, स्वरूपकथनार्थं प्रस्तुतानुपयोगिनोऽप्यर्थस्य

---

१ प्रयोजनशून्यत्वात् ॥ २ अन्यलभ्यत्वादिति । [illegible] । ३ [illegible] । सरस्वतीकण्ठाभरणे इति शेषः ॥ ४ अत एव [illegible] ॥

विवक्षायामपुष्टार्थत्वमित्यनयोर्भेदादिति भावः । पुनरुक्ता वेति । शब्दोपस्थिते पुनःशब्दानुपादानान्न पुनरुक्तिरित्यर्थः, अर्थपुनरुक्तिश्चापुष्टार्थत्वमेवेति भाव इति सारबोधिन्यादौ स्पष्टम् ।

एवमेव प्रदीपेऽपि सविस्तरं व्याख्यातम् । तथा हि, नन्वेतेऽर्था अपुष्टा इति सिद्धम्, परंतु अतिविततेति पुनरुक्तः, गगनपदादेव तदुपस्थितेः; मरुदुल्लासितसौरभेति विरुद्धम्, विकासात्पूर्वं सौरभाभावेन तद्विशिष्टस्य सूर्येणाप्रकाश्यत्वादिति नायं पृथगिति चेत्, न, गगनपदं न विततत्वे शक्तम् , अर्थलभ्यत्वे च न पुनरुक्तता । यदुक्तं भोजराजेन "काव्येतिहासादावर्थवृत्त्या लब्धस्य साक्षाद्ग्रहणमपौनरुक्त्याय,"—इति । नापि विरुद्धम्, सौरभस्योपलक्षणत्वात् । यद्वा, चित्रहेतु–(१)–पुरस्कारेण पूर्वभावाभिधानात् । अथाधिकपदादस्य को भेदः, अप्रयोजके (२) प्रयोजनाभावकृतोऽपि भेदो न संभवति । अत्र कश्चित्, तत्र (३) पदार्थान्वयसमकालं दुष्टत्वप्रतिभासः, इह तु (४)तदनन्तरमिति विशेष इति । तन्नातिसमीचीनम्, तथानियमे प्रमाणाभावात् । एतावता च विशेषेण शब्ददोषत्वमेकस्यापरस्यार्थदोषत्वमिति विभागानुपपत्तेश्च । विरुद्धमतिकृदमतपरार्थादौ शब्ददोषेऽन्वयप्रत्ययोत्तरमेव दुष्टत्वप्रतिभासात् । वयं तु पश्यामः, यत्र विवक्षित एवार्थोऽन्यथाऽभिधानेऽपि दुष्यति सोऽर्थदोषः, अन्यस्तु रसदोषभिन्नः (५) शाब्ददोष इति विवेकः । तथा च यत्राविवक्षितोऽप्यर्थः कथंचिदन्विततयाऽभिधीयते तत्राधिकपदत्वम्, तत्पदेन विनापि तन्निर्वाहात् । यत्र तु सोऽर्थो विवक्षित एव, परं त्वप्रयोजकत्वान्यलभ्यत्वाभ्यां न शब्देनोपात्तुमर्हस्तत्रापुष्टत्वम् । 'स्फटिकाकृति'—इत्यत्र (३८२ पृष्ठे) नाकृतिपदार्थ उपमानत्वेन विवक्षितः, तस्य (६) नैर्मल्याभावात् । 'यदपि च न कृतं नितम्बिनीनाम्'—इत्यत्रापि च (३८३ पृष्ठे) रतस्य स्तनपतनावधित्वव्यतिरेक एवानुचितत्वेन विवक्षितः न तु तत्कृतव्यतिरेकः, पूर्वार्धे तथैव क्रमात्, किं तु छन्दोनुरोधादिना द्वयमपि कथंचिदन्वितत्वेनोपात्तमित्याधिकपदत्वम् । अतिविततेत्यादौ तु अतिविततत्वादिकं वक्तुर्विवक्षितमेव (७), परं त्वर्थलभ्यत्वादिना नोपादानार्हमित्यपुष्टम् । व्यक्तं

१ चित्रहेत्विति । चित्रमत्र कार्यकारणयोः पौर्वापर्यविपर्ययलक्षणातिशयोक्तिरलंकारस्तद्धेतुत्वमभिप्रायेण कार्यस्य पूर्वभावाभिधानादित्यर्थं ॥ २ अप्रयोजके प्रयोजनशून्ये । प्रयोजनवत्यन्यलभ्ये हि न प्रयोजनाभावः । अधिकपदे तु स इत्यस्तु भेद , न त्वप्रयोजके, प्रयोजनाभावस्योभयत्र साम्यादिति भावः ॥ ३ तत्र पदार्थेति । एवं च तत्र प्रतीतेरेवानुपपत्तिरिति भावः ॥ ४ इहत्विति । अन्वयबोधोत्तर तल्लभ्यार्थस्यान्यलभ्यत्वानुसधानोत्तर तेषामनुपकारित्वग्रह इति प्रतीतावनुपपत्तिरिति भावः ॥ ५ रसदोषभिन्न इति । तस्य शब्दावाच्यत्वेनान्यथाभिधानासंभवादिति भाव ॥ ६ तस्येति । अवयवसंयोगरूपस्याकृतिपदार्थस्येत्यर्थ ॥ ७ वक्तुर्विवक्षितमेवेति । अतिविततत्वं श्रमोत्कर्षाय, मरुदुल्लासितसौरभत्वमतिशयोक्त्यलंकारबोधनाय, सरणित्व च विपिनादिवन्न कदाचिद्गमनं किं तु प्रतिदिन निरुपाधिगमनमित्यर्थलाभायेति भावः । अविवक्षितार्थकत्व इव विशेषानाधायकार्थबोधकेऽपि तद्दोषस्वीकारे किं बाधकमिति चिन्त्यम् ॥

सदा मध्ये यासामियममृतनिस्यन्दसुरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥

च (१) पूर्वस्य शब्ददोषत्वमुत्तरस्य चार्थदोषत्वमिति । दूषकताबीजं चाशक्त्युन्नय-नेन श्रोतुर्वैमुख्यम् । अत एव यमकादावदोषता, तत्रालंकारान्तरगर्भेणाशक्त्यनुन्नयनां-त् । कर्णावतंसादिपदे च विशेषद्योतकतया तदुपादानं नाशक्त्युन्नायकमित्यदुष्टत्वम् । अत एव विशेषणदानार्थं विशेष्यप्रयोगेऽपि दोषाभाव इति ॥

'कष्टः' प्रतीतिक्लेशवान्, दुरूह इत्यर्थः, तमुदाहरति सदामध्ये इति । स्वकाव्यस्य गम्भीरचमत्कृतार्थशालितया स्फुटार्थत्वाभावेऽपि दोषाभावसमर्थनाय कस्यचित्कवेरुक्ति-रियम् । महान्तः कवयो द्वादशादित्याश्च, रुचयोऽभिप्रायाः प्रभाश्च, अमृतं सुधा जलं च, रसः शृङ्गारादिर्माधुर्यं च, सरस्वती वाणी नदी च, उद्दामा प्रौढा महती च, मार्गो रीतिः पन्थाश्च, परिमलं चमत्कारः सौगन्ध्यं च, घनो निबिडो मेघश्च, यद्वा, घनो गभीरो मेघश्च, परिचिता अभ्यस्ताः संबद्धाश्च, प्रसादः सुव्यक्तत्वं स्वच्छता च । तथा च, यासां कवि-रुचीनां केवेरभिप्रायाणां (काव्यरूपाणां) मध्ये सदा अमृतनिस्यन्दा सुधास्राविणी चासौ सुरसा सुष्ठु रसाः शृङ्गारादयो यत्र तादृशी, उद्दामा प्रौढा, बहुमार्गा सुकुमारविचित्रम-ध्यमात्मकमार्गत्रयवती, वैदर्भीगौडीपाञ्चाल्याख्यरीतित्रयवतीति यावत्, एतादृशी इयं सरस्वती वाणी (कवित्वरूपा भारती) परिमलं चमत्कारं वहति दधाति; ताः एताः महतां कवीनां रुचयोऽभिप्रायाः (काव्यरूपाः) घनपरिचिता निबिडाभ्यस्ता अत्यन्ताभ्य-स्ता वा, यद्वा, गंभीरकाव्याभ्यस्ताः, स्फुरिता अनुभवारूढा मत्यां मधुरा अभीष्टा, यद्वा, स्फुरितः विषयीकृतः मधुरः शृङ्गारादिरसो याभिस्ताः, महाकाव्यव्योम्नि व्योमसदृशा-त्यन्तापरिच्छेद्ये महाकाव्ये (काव्यमार्गे) केन प्रकारेण प्रसादं सुबोधत्वं (स्फुटता) यान्तु गच्छन्तु, कथमितरकाव्यवत् प्रसन्नाः (सुबोधाः) भवन्तु, न कथमपीति भाव इति प्रकृतपक्षेऽर्थः ।

अप्रकृतपक्षे तु, यासाम् आदित्यप्रभाणां मध्ये सदा अमृतनिस्यन्दा जलस्राविणी चासौ सुरसा सुमधुरा (सुस्वादा), उद्दामा महती बहुमार्गा त्रिपथगामिनी इयं गङ्गा-ख्या सरस्वती नदी "सरस्वती सरिद्भेदे भूवाग्देवतयोरपि । स्त्रीरत्ने [illegible] च" इति विश्वः । परिमलं सुराङ्गनाङ्गसङ्गसंभवं सौगन्ध्यम्, यद्वा, [illegible]

१ व्यक्तं चेति । अविवक्षितार्थत्वं हि शब्ददोष इत [illegible] एवाप्रयोजकत्वान्[illegible] तथेति व्यक्तमिति भाव [illegible] ॥

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं वहति, ताः गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु; यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ताः मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः ॥

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं, जन्मन्येकः स एव महोत्सवः ॥

---

क्रियायामिति व्युत्पत्त्या क्रियाविशेषणम्, परिमलं स्वच्छं यथा स्यात्तथा वहति; ताः एताः स्फुरितेन प्रकाशेन मधुराः मनोहराः, 'स्फुरितरुचिराः'—इति पाठे स्फुरितो दृष्टो रुचिरो रम्यपदार्थो याभिस्तथाभूताः महतां द्वादशादित्यानां रुचयः प्रभाः महाकाव्यव्योम्नि महाकाव्यसदृशव्योम्नि घनपरिचिताः मेघसंबद्धाः वर्षाकालीनाः सत्यः केन प्रकारेण प्रसादं स्वच्छतां यान्तु, कथमितरशरदादिकालिकप्रभावत् स्वच्छाः भवन्तुः, न कथमपीत्यर्थः। शिखरिणी छन्दः। लक्षणमुक्तं प्राक् ( ७० पृष्ठे )।

कठिणत्वात् पद्यं व्याकर्तव्यमिति एनमेवार्थं संक्षेपेणाह अत्र यासामित्यादिना 'इति संक्षेपार्थः'—इत्यन्तेन। प्रकृतपक्षे योऽर्थस्तमाह यासां कविरुचीनामित्यादि। सुकुमारविचित्रमध्यमात्मकत्रिमार्गा वैदर्भीगौडीपाञ्चाल्याख्यरीतित्रयवती। अप्रकृतपक्षे योऽर्थस्तमाह यासामादित्यप्रभाणामिति। अस्य 'यथा'—इत्यादिः। एवं चात्रादित्यप्रभारूपो द्वितीयोऽर्थः उपमानम्, तेन सह वाच्यार्थस्योपमा व्यङ्ग्या। इति संक्षेपार्थ इति। इत्यर्थो विवक्षित इति भावः। अत्र पद्येऽयं हि विवक्षितोऽर्थः शब्दान्तरैः कथंचिद्योजितोऽपि क्लेशेनैव प्रतीयते इत्यर्थ एवायं दुष्टः। क्लिष्टादौ तु शब्दान्तरेणान्वयान्तरेण वा विवक्षितोऽर्थः सुखेनैव प्रतीयते इति भेदः। सम्यक्प्रतीतिविरहश्च दूषकताबीजम्, अतो नित्योऽयं दोष इति प्रदीपादौ स्पष्टम् ॥

'व्याहतः' "उत्कर्षो वाऽपकर्षो वाऽप्राग्यस्यैव निगद्यते। तस्यैवाथ तदन्यश्चेद्व्याहतोऽर्थस्तदा भवेत् ॥"—इत्युपलक्षिताविरुद्धत्ववानिति प्रदीपे स्पष्टम्। एवं च निन्दित्वा पुरस्कृत्य वा तदन्यथाकरणं व्याहतत्वमिति द्विविधं व्याहतत्वं फलितम्। तत्राद्यमुदाहरति जगतीति। मालतीमाधवे प्रथमाङ्के माधवस्योक्तिरियम्। ये नवेन्दुकलादयः, आदिना चन्द्रिकापद्मादिपरिग्रहः, भावाः पदार्थाः सन्ति ते जगत्येव जयिनः उत्कृष्टाः, न तु ममेति

अत्रेन्दुकलादयो यं प्रति परस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षायैमारोपय-तीति व्याहतत्वम् ॥

कृतमनुमतमदृष्टं वा यदिदं गुरु पातकं मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥

---

भावः । येऽप्यन्ये मनो मदयन्ति हर्षयन्ति तेऽपि जगत्येव प्रकृतिमधुराः प्रकृत्या स्वभावेन मधुराः रमणीयाः । लोका एव तान् प्रकृतिमधुरत्वेन व्यवहरन्तु, न त्वहं व्यवहरिष्ये इति भावः । तर्हि तव किं तथा ? तदाह मम त्वित्यादि । मम तु लोके इयं मालत्येव विलोचनयोः नेत्रयोः चन्द्रिका आह्लादिका । सा च यत् नयनविषयं याता दृष्टिगोचरतां गता स एक एव जन्मनि महोत्सवो न त्वन्य इत्यर्थः । हरिणी छन्दः । लक्षणमुक्तं प्राक् ( ११२ पृष्ठे ) ।

अत्र पूर्वार्धे साधारणचन्द्रिकाचन्द्रकलादयः स्वं प्रत्यसारतया प्रतिपादिताः, तेनैवोत्तरार्धे चन्द्रिकात्वमुत्कर्षायारोप्यत इति व्याघातः । तदेवाह अत्रेत्यादि । यं प्रति माधव प्रति । परस्पशप्रायाः तुच्छप्रायाः । स एव माधव एव । आरोपयतीति । मालत्यामिति भावः । व्याहतत्वमिति । न चात्रानुचितार्थता, तत्र पशुकुविन्दादिपदैः स्वार्थोपस्थितिदशायामेवोपश्लोक्यमानस्य तिरस्कारावगमः, अत्र तु चन्द्रिकाया सहजत. उपादेयत्वात् वाक्यार्थप्रतिसंधानानन्तरं चन्द्रकलादयो य प्रतीत्याद्यर्थपर्यालोचनेति भेदात् । अत्र हेयोपादेयत्वविरोधो दूषकताबीजमिति कमलाकरभट्टाः । प्रदीपकारास्तु, वाक्यार्थाप्रतीतिर्दूषकताबीजम्, नित्योऽयं दोष इत्याहुः ।

द्वितीयं यथा, "देवि ! त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम् । श्रुत्वा ते परिवारवारवनितागीतानि भृङ्गाङ्गना लीयन्ते मुकुलान्तरेषु शनकैः संजातलज्जा इव ॥"—इति रत्नावल्यां प्रथमाङ्के पद्यम् । अत्र पूर्वार्धे मुखोपमानतया पङ्कजान्युत्कर्ष्य तेषामेवाग्रे विनिर्जितानीति तदपकर्षवर्णनाद्व्याहतत्वं बोध्यम् । प्रमत्तोन्मत्तबालकानामुक्तौ तु नाभवन्मतयोगादिदोषः, तेषां संबन्धस्यानुद्देश्यत्वात् । प्रत्युतोन्मादादिव्यञ्जकत्वाद्गुणत्वेन्युद्घाटितं स्पष्टम् ॥

'पुनरुक्त'—शब्देन प्रतिपन्नत्वे (अवगतत्वे) सति पुनस्तेनैव प्रतिपादितः । अर्थेन प्रतिपन्नस्य प्रतिपादनेऽपुष्टत्वमुक्तम् । अयमाशयः, तेनैवेत्यस्य तद्वाचकेन पर्यायान्तरेणेत्यर्थः । तस्यैव पदस्योपादाने तु कथितपदत्वमुक्तम् । परिच्छिन्नप्रतिपादनस्य...स्येति बोध्यम् । यत्तु केचित्, पुनरुक्तलक्षणे प्रयोजनं विनेत्यपि विशेषणं देयम्, अनुप्रासकर्णावतंसादिषु प्रयोजनं विनेत्यंशाभावान्न पौनरुक्त्यमिति वदन्ति । तदयुक्तम्, एवं सति त्यस्यानित्यत्वोपपत्तं न स्यात्, प्रयोजनस्थले पुनरुक्तत्वस्यैवाभावप्रसङ्गात् । न चार्थं वि-

अत्रार्जुनार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः ।

यथा वा,

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि, गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण, व्रज कृप! समरं, मुञ्च हार्दिक्य! शङ्काम्,
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥

---

विधः, पदार्थवाक्यार्थभेदादिति प्रदीपोद्द्योतयोः स्पष्टम् । तयोराद्यम् ( पदार्थस्य पुनरुक्तत्वम् ) उदाहरति कृतमिति । "अरे रेऽर्जुनार्जुन! सात्यके! सात्यके! न युक्त ईदृशो मत्तातस्य सुतशोकभ्रान्त्या न्यस्तशस्त्रस्य दिवमुपगच्छतः केशाकर्षणरूपः पराभवः, अपि च"–इत्युपक्रम्य, पितृवधामर्षितस्याश्वत्थाम्न उक्तिरियम् । व्याख्यातमिदं पद्यं चतुर्थोल्लासे ( १११ पृष्ठे ) ।

अत्रार्जुनार्जुनेति संबोध्य यैर्भवद्भिरित्यनेन परामृश्य तेषामित्यनेन परामर्शादर्जुनस्यापि प्राप्तेः सभीमकिरीटिनामिति किरीटिपदार्थः ( अर्जुनपदार्थः ) पुनरुक्तः । तदेवाह अत्रार्जुनेत्यादि । पुनरुक्त इति । न च प्राधान्यप्रतिपत्तये पुनरुपादानमित्यदोषता, संबोधनेनैव तल्लाभात् । न च तेषामिति तत्पदार्थेऽर्जुनेऽर्जुनसाहित्यानन्वयादभवन्मतयोगोऽप्यत्रेति वाच्यम्, इष्टापत्तेः, किरीटिपदयोगार्थमादायापाततोऽन्वयसंभवाच्च । अत्र केचित्, नात्र पद्येऽयं दोषः; सभीमेत्यादौ उक्तानुक्तविस्मृतिद्वारा क्रोधातिशयव्यञ्जकत्वेन पौनरुक्त्यस्यानुगुणत्वात् । अत एवार्जुनसात्यक्योर्द्वयोरेव संबोधनेऽपि भवद्भिरिति बहुवचनं संगच्छते । न चायं वीरः, नरकरिपुणा सार्धमित्याद्युक्तेः रौद्रपरिपोषकत्वादित्याहुः । ध्वनितश्चायमर्थ उत्तरश्लोके वीरत्वकथनेन प्रदीपकृतेत्युद्द्योते स्पष्टम् ॥

द्वितीयं ( वाक्यार्थस्य पुनरुक्तत्वम् ) उदाहरति यथावेति । अस्त्रज्वालेति । वेणीसंहारे तृतीयाङ्केऽश्वत्थाम्न उक्तिरियम् । अस्त्राण्येव ज्वाला वह्निशिखाः ताभिः अवलीढं व्याप्तं यत् प्रतिबलं शत्रुसैन्यमेव जलधिः समुद्रस्तस्यान्तर्मध्ये औवार्यमाणे वाडवाग्नितुल्ये, सर्वधन्वीश्वराणां सकलधनुर्धरश्रेष्ठानां गुरौ, सेनानाथे दुर्योधनसेनापतौ, अस्मिन् समीपवर्तिनि, मम पितरि प्रसिद्धे द्रोणाचार्ये, स्थिते विद्यमाने सति, हे कर्ण! संभ्रमेण पलायनवेगेन अलम्, हे कृप! समरं युद्धं व्रज गच्छ, हे हार्दिक्य! कृतवर्मन् ( १ ) शङ्कां मुञ्च त्यज, न किंचिद्भयमस्तीति भावः । चापं धनुरेव द्वितीयं यस्य चापैकसहाये

---

१ कृतवर्मनामा यादवविशेषः ॥

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः ॥

भूपालरत्न! निर्दैन्यप्रदानप्रथितोत्सव! ।
विश्राणय तुरङ्गं मे, मातङ्गं वा मदालसम् ॥

अत्र मातङ्गस्य प्राङ्निर्देशो युक्तः ॥

---

ताते पितरि ( द्रोणाचार्ये ) रणधुरं युद्धभारं वहति सति भयस्य कोऽवकाशोऽवसर इत्यर्थः । अत्र सेनाया जलधित्वेन पितुरौर्वत्वेन रूपणाद्ध्वंसघातकभावः. अस्त्रज्वालेत्यनेन प्रसिद्धवाडवापेक्षया व्यतिरेकश्च व्यज्यते, प्रसिद्धो हि जलधेरेव भक्षकः, अयं तु साग्नेरपि भक्षक इति प्रतीतेः । मम पितरीत्यनेन यस्य पुत्र ईदृशः किं वक्तव्यं तस्य माहात्म्यमिति ध्वनितम् । गुरौ इत्यनेन गुरुवधभिया न कोऽपि हन्तेति ध्वनितम् । स्रग्धरा छन्दः । लक्षणमुक्तं प्राक् ( ११३ पृष्ठे ) ।

अत्र चतुर्थेत्यादि । अत्र 'अलं ( १ ) संभ्रमेण' 'को भयस्यावकाशः'—इत्यभिन्नार्थाविति चतुर्थपादार्थः पुनरुक्त इत्यर्थः । न च वक्तुः रौद्ररसाविष्टत्वं समाधानमाशङ्कनीयम्, वीरस्यायुक्तकारित्वावर्णनात् । दूषकताबीजं च निष्प्रयोजनद्वितीयाभिधानेन श्रोतुर्वैमुख्यम् । अत एव प्रयोजनसत्त्वेनादोषत्वादनित्योऽयं दोषः । केचित्तु ( २ ), अर्थप्राप्तस्यापि वचने पुनरुक्तता । तदुदाहरणमस्त्रज्वालेत्यादि । अप्रयोजकद्वितीयाभिधानमात्रस्थले त्वपुष्टार्थत्वमित्याहुरिति प्रदीपोद्द्योतयोः स्पष्टम् ।

'दुष्क्रमः'— दुष्टः अनुचितः क्रमो यत्रेत्यर्थः । दुष्टत्वं च क्रमस्य लोकशास्त्रविरुद्धत्वम् । तत्राद्यमुदाहरति भूपालेति । राजानं प्रति कस्यचिदर्थिन उक्तिरियम् । हे भूपालेषु रत्न श्रेष्ठ "रत्नं स्वजातिश्रेष्ठेऽपि"— इत्यमरः । निर्गतं दैन्यं यस्मात् ( अर्थादर्थिनां ) तथाविधे प्रदाने, यद्वा, निर्दैन्यम् अकार्पण्यं यथा भवति तथा प्रदाने प्रथितः ख्यातः उत्सवो यस्य तादृश हे राजन् त्वं मे तुरङ्गम् अश्वं विश्राणय देहि । मदेनालसं मातङ्गं गजं वा विश्राणयेत्यनुषङ्गः ।

अत्र तुरङ्गं मातङ्गं वेति क्रमो लोकविरुद्धः । तदेवाह अत्र मातङ्गस्येत्यादि । अत्र तुरङ्गभूयिष्ठं मातङ्गं देहि तुरङ्गं वेति लौकिकः क्रमः, गुरुदानाशक्तौ लघुदानौचित्यात् । अङ्कुशश्च यथास्थित एव क्रमो विवक्षित इत्यर्थदोष एवायमिति प्रदीपे स्पष्टम् । शास्त्रविरो-

---

१ अत्रालमिति । तात इत्यादेस्तदर्थलभ्यस्य कथनात्र पौनरुक्त्यमित्याशयः ॥ २ [illegible] वृत्तिग्रन्थो मतान्तराभिप्रायेणेति ध्वनयितुमाह केचित्त्विति । अस्त्रज्वालेत्यादिना [illegible] द्विर्वचनेऽपि पुनरुक्तत्वमेव । यत्र त्वप्रयोजन एवाभिधाने तत्रापुष्टत्वम्, न तु [illegible] भिधाने इत्यर्थः । अत्र च प्रकाशविरोध एवारुचिबीजमिति प्रभायां स्पष्टम् ॥

स्वपिति यावदयं निकटे जनः, स्वपिमि तावदहं, किमपैति ते ।
तदयि सांप्रतमाहर कूर्परं, त्वरितमूरुमुदञ्चय कुञ्चितम् ॥

एषोऽविदग्धः ॥

---

क्कारास्तु मातङ्गस्य बहुमूल्यत्वेन तदलाभे तुरङ्गप्रार्थनौचित्यादिति भावः । यत्र हस्तिनामेव सुलभत्वं तत्र नेदमुदाहरणमिति मन्तव्यमित्याहुः । उक्तरीत्या शास्त्रविरुद्धमप्यूह्यम् । यथा,

कावारिऊण खउरं गामडलो मज्जिऊण जेमिअ अ ।
णक्खत्तं तिहिवारे जोइसिअं पुच्छिदुं चलिदो ॥ इति ।

"कारयित्वा क्षौरं ग्रामवृद्धो (१) मज्जित्वा भुक्त्वा च । नक्षत्रं तिथिवारौ ज्यौतिषिकं प्रष्टुं चलितः ॥"—इति संस्कृतम् । 'कावारिऊण'—इत्यत्र 'काराविऊण'—इति क्वचित्पाठः । अत्र नक्षत्रादिज्ञानपूर्वकं क्षौरस्य धर्मशास्त्रेण विधानादयं क्रमो धर्मशास्त्रविरुद्धः । दूषकताबीजं च विरोधेनाप्रतीतिः सहृदयोद्वेगो वेति नित्य एवायं दोष इति प्रदीपे स्पष्टम् ॥

'ग्राम्यः'—ग्रामसंभवः, अविदग्धोक्तिप्रतिपादितः रिरंसादिश्च । यदुक्तम्, "स ग्राम्योऽर्थो रिरंसादिः पामरैर्यत्र कथ्यते । वैदग्ध्यवक्रिमबलं हित्वैव वनितादिषु ॥"—इति (२) । तमुदाहरति स्वपितीति । नवोढां प्रति रिरंसोरुक्तिरियम् । अयं जनः कश्चित् यावत् स्वपिति स्वापं करोति तावत् अहं निकटे त्वत्समीपे स्वपिमि, ते तव किम् अपैति गच्छति, न काचित्क्षतिरिति भावः । अयीति संबोधनम् । तत् तस्मात् सांप्रतं इदानीं कूर्परः कफोणिः, हस्तवर्ती अस्थिप्रधानोऽवयवविशेषः, "स्यात्कफोणिस्तु कूर्परः" इत्यमरः । तम् आहर अपसारय, तथा, कुञ्चितं संकुचितम् ऊरुं त्वरितं शीघ्रम् उदञ्चय प्रसारयेत्यर्थः । 'तदपि संहर कूर्परमायतम्'—इति पाठे तत् तस्मात् आयतं स्पर्शरोधकं कूर्परं संहर, कुञ्चितम् ऊरुमपि त्वरितम् उदञ्चय विकासयेत्यर्थः । वस्तुतस्तु, वेश्यां प्रत्युक्तिरियम् । अतएव 'तदयि सांप्रतमाहर रूपकम्'—इति पाठः प्राचीनपुस्तकेषु दृश्यते । अत एव च 'रूपकं दीनारादि सांप्रतम् आहर स्वीकुरु'—इति व्याख्यातं सरस्वतीतीर्थेनेत्यलमप्रसारेण । द्रुतविलम्बितं वृत्तम् । लक्षणमुक्तं प्राक् (८२ पृष्ठे) ।

अयमर्थो ग्राम्य इत्याह एष इति । नायक इत्यर्थः । अविदग्धः पामरः । अत्र 'निकटे तावदहं स्वपिमि'—इत्यविदग्धरिरंसोक्तिः, स्वपिमीत्यस्योपगमनार्थत्वात् । एवमन्यदपीति भावः । दूषकताबीजं चाश्लीलवत् सहृदयहृदयवैमुख्यम् । किं चैतादृशो-

---

१ 'ग्रामद्विज.—इति संस्कृतं केचिदाहुः ॥ २ ग्राम्य.—इति—प्रदी० ॥

मात्सर्यमुत्सार्येत्यादे,

अत्र प्रकरणाद्यभावे संदेहः, (शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः) ॥

गृहीतं येनासीः परिभवभयान्नोचितमपि,
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयात्,
विमोक्ष्ये शस्त्र! त्वामहमपि यतः स्वस्ति भवते ॥

क्तिकवलितो विभावादिरूपोऽर्थो न रसाय पर्याप्यते, भ्रष्टमिव बीजमङ्कुरायेति द्रष्टव्यम् । विदूषकोक्तौ न दोष इत्यनित्योऽयम् । अत्रार्थस्यैव ग्राम्यता, न शब्दस्य, प्रकरणाद्यभावादिति प्रदीपसारबोधिन्यादौ स्पष्टम् ।

'संदिग्धः'—संदेहविषयः, तत्प्रयोजकरूपवानिति यावत् । तमुदाहरति मात्सर्यमिति । व्याख्यातमिदं पञ्चमोल्लासे (२६१ पृष्ठे) ।

अत्रेत्यादि । अत्र भूधरनितम्बानां कामिनीनितम्बानां वा सेव्यत्वं व्यञ्जनया प्रतिपादयिषितं तत् द्वितीयेन विरुद्धद्वयोपस्थित्या संदिह्यते, प्रकरणाद्यभावात् । यत्तु वक्तृविशेषसंदेह इति व्याख्यानं सर्वमन्यानाम्, तद्वुत्तानताविलसितम्, वक्तृ. पदवाक्यार्थत्वाभावेन तत्संदेहस्यार्थदोषत्वाभावात् किमुपदद्वयानभिधेयत्वाच्च । अत एव वृत्तिकृता वक्तृविशेषनिश्चयः (शान्तशृङ्गारित्वान्यतरनिश्चयः) संदेहाभावप्रयोजकत्वेनोक्तः, तन्निश्चये एकतरनितम्बस्य सेव्यत्वनिर्णयेनासंदेहात् । वन्द्यामित्यादौ (२१२ पृष्ठे) द्वितीयासप्तम्यन्तत्वाभ्यां पदे एव संदेहोऽत्र तु पदानामसंदिग्धत्वे सत्येव स इति पदसंदिग्धत्वाद्भेदः । दूषकताबीजं चोद्देश्यनिश्चयविरहः (१) । यत्र तु संदेह एवोद्देश्यस्तत्राद्दोषत्वमेवेति भाव इति प्रदीपोद्द्योतयोः स्पष्टम् ॥

'निर्हेतुः'—निष्क्रान्तो हेतुर्यस्मादित्यर्थः, अनुपात्तहेतुकोऽर्थो निर्हेतुरिति यावत् । तमुदाहरति गृहीतमिति । वेणीसंहारे तृतीयाङ्के द्रोणाचार्ये हते शोकाविष्टस्याश्वत्थाम्नः शस्त्रं प्रत्युक्तिरियम् । हे शस्त्र येन मत्पित्रा (द्रोणाचार्येण) नोचितमपि (ब्राह्मणस्य स्ववृत्तिविरोधात्) अनुचितमपि त्वं परिभवभयात् क्षात्रकृतानादरभयात् गृहीतम् अङ्गीकृतम् आसीः । 'नोज्झितमपि'—इति पाठे येन पित्रा त्वं गृहीतं स्वर्वृत्तिविरोधेऽपि स्वीकृतम् आसीः, परिभवः शस्त्रधारिभ्यस्तिरस्कारस्तद्भयात् नोज्झितं न त्यक्तमपीत्यन्वयः । यस्य द्रोणाचार्यस्य प्रभावात् सामर्थ्यात् तव खलु कश्चिन विषयो लक्ष्यः

1 उद्देश्यनिश्चयविरह इति । पदमेतत्प्रन्थेनेह क्लिष्टपदे [illegible] ॥

अत्र शस्त्रमोचने हेतुर्नोपात्तः ॥

नाभूदिति न, अपि तु सर्वोऽपि युयुत्सुर्विपयोऽभूदित्यर्थः, "द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः"—इति न्यायात् । तेन पित्रा त्वं सुतशोकात् सुतस्य मम मिथ्यामरणश्रवणजात् शोकात् परित्यक्तम् उज्झितम् असि, न तु भयात् । अतो हेतोः अहमपि त्वां विमोक्ष्ये त्यक्ष्यामि । क्वेत्यपेक्षायामाह यत इत्यादि । यतः यत्र भवते स्वस्ति विश्रामसुखं तत्रेत्यर्थः । यच्छोकात् तेन धनुस्त्यक्तं तच्छोकात् स्वस्यापि धनुस्त्याग उचित इति भावः । यत इत्यत्र सार्वविभक्तिकस्तसिः । भवते इत्यत्र नमःस्वस्तीति सूत्रेण स्वस्तियोगे चतुर्थी । शिखरिणी छन्दः । लक्षणमुक्तं प्राक् (७० पृष्ठे) ।

पुरा किल युद्धे अश्वत्थामनाम्नि गजे मृते 'अश्वत्थामा हतः'—इति युधिष्ठिरेणोक्तमाकर्ण्य द्रोणाचार्यः पुत्रमरणभ्रान्त्या शोकात् स्वशस्त्रं त्यक्तवान्, अथ च मारितो धृष्टद्युम्नेन, ततः पितृशोकादश्वत्थामाऽपि स्वशस्त्रं मुमुक्षुरासीदिति महाभारतीयकथाऽत्रानुसंधेया।

अत्र यथा द्रोणाचार्यकर्तृकशस्त्रमोचने सुतशोकादिति हेतुरुक्तस्तथाऽश्वत्थामकर्तृकशस्त्रमोचने पितृशोकादिति हेतुर्वक्तव्यः, स च नोक्त इति निर्हेतुत्वम् । तदेवाह अत्र शस्त्रेत्यादि । स्वशस्त्रत्यागे हेतुर्नोपात्त इत्यर्थः । न च ततः पितृशस्त्रत्यागादहमपि विमोक्ष्ये इति अस्त्येव तदुपादानमिति वाच्यम्, तावन्मात्रस्याहेतुत्वात् । प्रमादिना पित्रा शस्त्रत्यागेऽपि वीरस्य तद्ग्रहणमेवोचितम् । न च शोकमूलकतदीयतत्त्यागो हेतुः, पितृशोकनिवारणाय तद्दशायामपि तद्ग्रहणस्यौचित्यात् । तस्माद्यथा तेन सुतशोकात् त्यक्तम् एवमहं पितृशोकात् त्यक्ष्ये इति पितृशोक एव तद्धेतुः, शोकाविष्टे चेतसि उत्साहस्याप्ररोहात् । स च नोपात्त इति भाव इत्युद्द्योते स्पष्टम् ।

व्याख्यातमिदं प्रदीपेऽपि, अत्र स्वशस्त्रत्यागे हेतुर्नोपात्तः । ननु तं विनाऽपि प्रतीतेः पर्यवसानं नवा, आद्ये दोषाभावः; अन्त्ये साकाङ्क्षसंकर इति । अत्र केचित्, उपात्तस्य (१) परेणान्वये साकाङ्क्षत्वम्, अनुपादाने निर्हेतुत्वमिति विशेष इति । तन्न । साकाङ्क्षोदाहरणे उपेक्षितुमित्याकाङ्क्षतीत्यनेनानुपात्तस्य साकाङ्क्षताया एव वृत्तौ प्रदर्शनात् । तस्माद्धेतुतद्भिन्नसापेक्षतया द्वयोर्भेद इत्येव ज्यायः । यद्वा, अत्राप्रतीतिमात्रम्, तत्र तु विरुद्धा प्रतीतिः, स्त्रीरत्ने एव मर्पप्रतीतेरिति विशेषः । दुष्टिबीजं चोद्देश्यप्रतीतिविरहः । अत एव प्रसिद्धौ (२) अनुपादानेऽपि न दोष इति ॥

१ उपात्तस्येति । अयमर्थः, स्त्रीरत्न चेत्यादौ स्त्रीरत्ने मर्पस्यायोगात्परस्येत्यैतत्साकाङ्क्षता स्त्रीरत्नस्य । तच्चोपात्तमपि उत्कर्षं चेत्यनेनान्वितत्वान्न स्त्रीरत्नेनान्वययोग्यमित्यतस्तत्र साकाङ्क्षत्वदोषः । अनुपात्तेन हेतुना साकाङ्क्षत्वे निर्हेतुत्वमिति ॥ २ प्रसिद्धाविति । 'चन्द्रंगता पद्मगुणान्न भुङ्क्ते.'—इत्यादौ वक्ष्यमाणपद्ये निशि पद्मसकोचादिहेतुप्रसिद्धावित्यर्थं इति प्रभायां स्पष्टम् ॥

इदं ते केनोक्तं कथय कमलातङ्कवदने!
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद् दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् ।

यथा वा,

उपपरिसरं गोदावर्याः परित्यजताध्वगाः!
सरणिमपरो मार्गस्तावद्भवद्भिरिहेक्ष्यताम् ।

---

"प्रसिद्धिविद्याविरुद्धः"—इत्यत्र प्रसिद्धिविद्यापदाभ्यां विरुद्धपदस्य प्रत्येकमन्वयः, द्वन्द्वान्ते श्रूयमाण पदमिति न्यायात् । तथा च प्रसिद्धिविरुद्धो विद्याविरुद्धश्चेति दोषद्वयम् । तत्र प्रसिद्धिविरुद्धो यत्रार्थे न प्रसिद्धिः स प्रसिद्धिविरुद्धः । स च द्विविधः, लोकप्रसिद्धिविरुद्धो कविप्रसिद्धिविरुद्धश्चेति । तत्राद्यम् ( लोकप्रसिद्धिविरुद्धम् ) उदाहरति इदं ते इति । हे कमलातङ्कवदने कमलानामातङ्को भय यस्मात्तादृश वदनं यस्यास्तथाभूते, अनेन वदनस्य चन्द्रत्वं व्यङ्ग्यम्, यद्वा. कमलानामातङ्को भयं यस्मात्स चन्द्रः तद्वत् वदनं यस्यास्तथाभूते, हे चन्द्रमुखीति यावत्, ते तव इदं केन प्रतारकेणोक्तं कथय, यत् एतस्मिन् वस्तुनि ( करस्थिते कटकाकारे चक्रे ) हेम्न. सुवर्णस्य कटकं कङ्कणमिति खलु धियं बुद्धि धत्से धारयसि, निश्चयं करोषीति यावत् । तर्हि किमिदं तत्राह इदमित्यादि । इद प्रत्यक्षतो दृश्यमानं तत् प्रसिद्ध दुःखेन साधयितुं शक्या. दुःसाधा. दुराराध्याः ( तरुणाः जितेन्द्रियाश्च ) तेषाम् आक्रमणे वशीकरणे परमास्त्रभूत स्मृतिभुवा कामेन प्रीत्या तव करकमलमूले प्रकोष्ठे विनिहितं स्थापितं चक्रमित्यर्थ. । शिखरिणी छन्दः । लक्षणमुक्तं प्राक् ( ७० पृष्ठे ) ।

अत्र कामस्य चक्र लोके न प्रसिद्धमिति लोकप्रसिद्धिविरुद्धोऽर्थ. । तदेवाह अत्रेत्यादि । अप्रसिद्धमिति । भगवतो विष्णोरेव चक्रं प्रसिद्धम्, कामस्य तु पञ्चशरैरेव प्रसिद्धेः । अन्यदीयशस्त्रानिधानं त्वफलमिति भाव. ॥

कविप्रसिद्धिविरुद्धमुदाहरति यथा वेति । उपपरिसरमिति । अशोककलिकादर्शनमूर्छितस्य कथंचिद्गृहमागच्छतः पाथिकस्य तेनैव पथा व्रजन्तं पथिकान्तरं प्रत्युक्तिरियम् । भोः अध्वगाः पान्थाः गोदावर्या. उपपरिसरं परिसरसमीपे ( तटसमीपे ) मार्गं [illegible] परित्यजत, इह प्रदेशे भवद्भि. तावत् यावदशोकोऽङ्कुरितस्तावदित्यर्थ. अपरो मार्गः ईक्ष्यता दृश्यताम्. अन्वेष्यतामिति यावत् । अवेक्ष्यतामिति क्वचित् [illegible] पाठ । रे[illegible]

इह हि विहितो रक्ताशोकः कयाऽपि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥

अत्र पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः ।

---

माह इहहीत्यादि । हि यस्मात्कारणात् इह गोदावरीपरिसरे हताशया हता पापजनकत्वेन निन्द्या आशा पथिकमारणेच्छा यस्यास्तथाभूतया कयाचित् मत्ततरुण्या रक्ताशोकः चरणनलिनन्यासेन पादपद्माघातेनोदञ्चन्तः उदयं गच्छन्तो नवाङ्कुरा एव ( सर्वावयवव्यापनात् ) कञ्चुकं यस्य तादृशो विहितः कृत इत्यर्थः । हताशयेति परपीडकत्वाद्रोषोक्तिः । रक्तपदेन नवपल्लवता । आदौ नदीतीरम्, तत्रापि रक्ताशोकः, तत्रापि सपुष्प इत्युद्दीपनातिशयः । हरिणी छन्दः । लक्षणमुक्तं प्राक् ( ११२ पृष्ठे ) ।

अत्र वनितायाः पादाघातेनाशोकस्य पुष्पोद्गम एव कविप्रसिद्धो न त्वङ्कुरोद्गम इति कविप्रसिद्धिविरुद्धोऽर्थः । यद्यपि पुष्पोद्गमेन नवाङ्कुरोद्गमः स्यादेवेति न बाधस्तथाऽपि तथा कविवर्णनाविरहेण तद्विरुद्धः (१) । तदेवाह अत्रेत्यादि । कविषु प्रसिद्ध इति । तदुक्तम्, "स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति, वकुलः सीधुगण्डूषसेकात्, पादाघातादशोकः, तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्मवाक्यात्, पटुमधुहसनाच्चम्पको, वक्त्रवाताच्चूतो, गीतान्नमेरुः, विकसति च पुरो नर्तनात्कर्णिकारः ॥"—इति । दूषकताबीजं च विरोधादर्थाप्रतीतिः । उत्पातादिना तत्प्रतीतावदोषः ( २ ) ।

व्याख्यातमिदं सुधासागरकारैरपि, तथा हि, अत्रेत्यादि । अयमाशयः, लोकप्रसिद्धिभ्रान्त्या प्रयुक्तं लोकाप्रसिद्धं लोकप्रसिद्धिविरुद्धमित्युच्यते । कविसंप्रदायप्रसिद्धिभ्रान्त्याऽशोकाङ्कुरोद्गमः कविसंप्रदायाप्रसिद्धो वर्णित इति कविप्रसिद्धिविरुद्धोऽर्थः । लोकस्तु पुष्पाङ्कुरोद्गमयोर्द्वयोरप्यदर्शनात्तत्रोदासीन एवेति । एवं च यत्प्रदीपकारैरुक्तम्, "यत्तूपपरिसरमिति कविसमयसिद्धोदाहरणं तदयुक्तम्, चरणन्यासेनाशोकाङ्कुरस्य कवीनामप्यसंगतेः, पुष्पोद्गम एव तेषां समयात्"—इति । तद्रिक्तं वचः, न हि श्रीवृत्तिकारैः कविप्रसिद्धेर्बलवत्त्वदर्शनायोपपरिसरमित्युदाहृतम्, किं तु कविप्रसिद्धिविरोधदर्शनायैव । न च पूर्वोदाहरणेन गतार्थता शङ्क्या, उदाहरणयोर्भेदस्य प्रतिपादितत्वात् । कथमन्यथाऽग्रे सुसितवसनेत्युदाहरणं संगच्छेत । तस्मान्महोपाध्यायानाम् ( प्रदीपकाराणाम् ) ईर्ष्यामात्रमत्रावशिष्यते । न हि गीर्वाणगुरवोऽपि श्रीवाग्देवतावतारोक्तिम् ( मम्मटोक्तिम् ) आक्षेप्तुं प्रभवन्ति, किं पुनर्मानुषा मशकाः । सुष्ठूक्तं खलु देवनाथतर्कपञ्चाननैः " य एष कुरुते मनो विषदि गौरवीणां गिरां, स वामन इवाम्बरे हरिणलाञ्छ-

---

१ यद्यपि—द्विरुद्धः—सारबो० ॥ २ दूषकता—द्दोष.—प्रदी० ॥

( मुसितवसनालंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का, क नासि शुभप्रदः ॥

अत्रामूर्ताऽपि कीर्तिः ज्योत्स्नावत्प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम् ॥ )

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥

ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम् ।

---

नं वाञ्छति । लिलङ्घयिषति सिंहिकारमणकेसरं फेरुवत्, पतङ्ग इव पावकं गृहगोधावत् धावति ॥"–इतीति ॥

लोकविरुद्धस्यापि कविप्रसिद्धत्वेन न विरुद्धत्वमिति दर्शयति मुसितेति । राजानं प्रति कवेरुक्तिरियम् । हे राजन् कदाचन एकदा कौमुदीमहसि ज्योत्स्नोद्द्योते, यद्वा, कौमुदी ज्योत्स्ना महस्तेजो यस्य तस्मिन् चन्द्रे सति मुसितानि अत्यन्तधवलानि वसनानि अलंकाराश्च यस्यास्तथाभूतायां सुदृशि मृगनयनायां स्वैरं यान्त्याम् अभिसरन्त्यां सत्यां विधुश्चन्द्रः अस्तंगतोऽभूत् । तदनु तदनन्तरं केनापि केनचित्पुरुषेण भवत कीर्तिः अगीयत गीता, येन कीर्तिगानेन हेतुना (कौमुदीवदेव प्रकाशे जाते) साऽभिसारिका मुक्ताशङ्का त्यक्ताशङ्का सती, मुक्ताशङ्कमिति पाठे निःशङ्कं यथा स्यात्तथा प्रियगृहं कान्तसमीपम् अगात् गतवती, अतस्त्वं क कस्मिन् देशेऽवसरे वा शुभप्रदो नासि न भवसि, अपि तु सर्वत्र सुखप्रदोऽसीत्यर्थः । हरिणी छन्दः । लक्षणमुक्तं प्राक् ( १२२ पृष्ठे ) ।

अत्र कीर्तेर्धवलतागुणाश्रयत्वरूपं मूर्तत्वं ज्योत्स्नावत्प्रकाशकता च लोकविरुद्धे अपि कविसमयसिद्धे इत्यदोषः । तदेवाह अत्रामूर्ताऽपीत्यादि । कविप्रसिद्धेरिति । यत्र लोकस्य कवेश्च प्रसिद्ध्योर्विरोधस्तत्र कविप्रसिद्धेर्बलवत्त्वम्, तस्य काव्ये प्रधानत्वादिति भावः । नदुष्टमिति । एवमकीर्त्यादेर्मालिन्यादौ द्रष्टव्यम् । एवं च लोकविरुद्धस्यापि कविसमयप्रसिद्धिविरोध एव दोषः ॥

'विद्याविरुद्धः'–इत्यत्र विद्याशब्देन शास्त्रमुच्यते, तथा च विद्याविरुद्धः शास्त्रेण विरुद्धत्ववानित्यर्थः । स चायं शास्त्रभेदाद्भिद्यते । तत्र धर्मशास्त्रविरुद्धमुदाहरति सदास्नात्वेति । बुधः पण्डितः । निशीथिन्याम् अर्धरात्रे । सकलं वासरमित्युत्तरार्धेनान्वयः ।

अत्र निमित्तं विना रात्रौ स्नानं धर्मशास्त्रविरुद्धम् । तदेवाह ग्रहोपरागादिकमिति ।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते ।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना ॥

एतत् अर्थशास्त्रेण ।

विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना ।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥

---

वज्राशनिवत्समुदितप्रयोगः । आदिपदेन निमित्तमात्रसंग्रहः । तदुक्तम् "राहुदर्शन-संक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च ॥"—इति । धर्मशास्त्रेणेति । धर्मशास्त्रं स्मृतिः । विरुद्धमिति । तदुक्तम्, "रात्रौ स्नानं न कुर्वीत राहोरन्यत्र दर्शनात्"—इति । शातातपोऽप्याह "स्नानं दानं तथा श्राद्धमनन्तं राहुदर्शने । आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥"—इति ।

विद्याविरुद्ध इत्यत्र विद्येत्युपलक्षणम्, 'सविषाणस्तुरङ्गमः' इत्यादौ प्रत्यक्षादिविरुद्धस्येति बोध्यम् । अत एवाहुः सरस्वतीकण्ठाभरणकारादयः, यथा, "आधूतकेसरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः । गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः ॥" यथा, "यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता । माता च मम वन्ध्याऽऽसीत्स्मराभोऽनुपमो भवान् ॥" यथा, "एष वन्ध्यासुतो याति खपुष्पकृतशेखरः । मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥"—इत्यादीति ॥

अर्थशास्त्रविरुद्धमुदाहरति अनन्येति । यस्य पुरुषस्य बाह्वोः भुजयोर्बलं सामर्थ्यम् अनन्यसदृशम् अनुपमं समीक्ष्यते विलोक्यते, तस्य सा प्रसिद्धा षाड्गुण्यानुसृतिः संधिविग्रहयानासनद्वैधसंश्रयाः षड्गुणाः त एव षाड्गुण्यम्, (स्वार्थे ष्यञ्,) तस्यानुसृतिः अनुसरणं निष्प्रयोजनेति सत्यमित्यर्थः । "संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः"—इत्यमरः ।

अयमर्थो नीतिशास्त्रविरुद्धः, समर्थं प्रत्यपि षाड्गुण्योपदेशात् । तदेवाह एतदिति । अर्थशास्त्रेणेति । नीतिशास्त्रेणेत्यर्थः । विरुद्धमिति शेषः । महाबलस्यापि संध्यादिषाड्गुण्यानुसरणमर्थशास्त्रेण विहितमिति तद्विरोध इति भावः ॥

कामशास्त्रविरुद्धमुदाहरति विधायेति । अनङ्गाङ्गणं कन्दर्पविलासस्थानरूपा अङ्गना काचित् वनिता केयूरं बाहुभूषणं दूरे विधाय दूरीकृत्य कान्तेन भर्त्रा कृतां करजानां नखानामुल्लेखाः क्षतानि तेषां मालिकां पङ्क्तिं बभार दधावित्यर्थः । अनङ्गाङ्गणमित्यनेन रमणीयतातिशयः । अनङ्गाङ्गणमिति केयूरविशेषणमिति केचित् । अनङ्गाङ्गदमिति पाठेऽनङ्गायाङ्गप्रदमित्यर्थः, तदा केयूरविशेषणमेवेति बोध्यम् ।

मृगचक्षुपमद्राक्षमित्यादि कथयत्ययम्।
पश्यैष च गविसाह सुत्रामाणं यजेति च॥

वक्राद्यौचित्यवशाद्
दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ॥ ५९॥

वक्तृ–प्रतिपाद्य–व्यङ्ग्य–वाच्य–प्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः, क्वचिन्न दोषो न गुणः। तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च, रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः;

---

यथेत्युदाहरति मृगेति। मृगचक्षुपं मृगनेत्राम्। सुत्रामाणम् इन्द्रम्। अत्र प्रथमार्धे शृङ्गारव्यञ्जकेऽद्राक्षमिति पदं श्रुतिकटु, तृतीयपादे "न केवला (१) प्रकृतिः प्रयोक्तव्या"–इति व्याकरणविरोधात् गोपदं च्युतसंस्कृति, चतुर्थपादे "सुत्रामा गोत्रभिद्वज्री"–इत्यमरकोशेन "सुत्रामाऽपि च सूत्रामा"–इति द्विरूपकोशेन च तथाऽऽम्नातमपि सुत्रामपदं काव्यादराविषयत्वादप्रयुक्तम्। परं तु परोक्तानुकरणादेतेषामदुष्टता। अनुकरणे चैषामदोषत्वबीजं प्रतिपादितं (२) तद्वदन्यत्राप्यूह्यम्। ननु श्रुतिकटुत्व–प्रतिकूलवर्णादीनां पुरोवाद इवानुवादेऽपि (३) स्वरूपानपायात्कथं न दोषतेति चेत्, न, तस्य शब्दस्यान्यथावक्तुमशक्यत्वेन श्रोतुर्वैमुख्याद्यभावेनादोषत्वादित्युद्द्योतादौ स्पष्टम्॥

इदानीं वक्तृ–प्रतिपाद्य–व्यङ्ग्य–वाच्य–प्रकरणादिमहिम्ना दोषस्यापि क्वचित् रसोत्कर्षापकर्षकारित्वाभावाद्दोषत्वाभावमात्रम्, क्वचित्तु प्रकृतरसोत्कर्षकत्वात् भाक्तो गुणव्यवहारोऽपीत्याह वक्त्रादीति। आदिशब्दार्थं वदन् सूत्रं व्याचष्टे वक्तृप्रतिपाद्येति। वक्त्रादीनां स्वरूपं तृतीयोल्लासे (६७ पृष्ठे) प्रदर्शितम्। प्रतिपाद्यपदेनार्थो बोधनीयजनश्चोच्यते। व्यङ्ग्यपदमत्र रसरूपव्यङ्ग्यपरम्। महिम्ना माहात्म्येन। नोभाविति विवृणोति क्वचिन्न दोषो न गुण इति। उत्कर्षापकर्षविरहादनुभयरूपता। तेन गुणाभावस्य दोषत्वं दोषाभावस्य वा गुणत्वं निरस्तम्, विनिगमकाभावात्, अभावस्य तारतम्यानुपपत्तेश्चेति बोध्यम्। दोषस्य गुणत्वं कुत्रेत्याकाङ्क्षायामाह तत्रेत्यादि। वैयाकरणादाविति। आदिपदात् क्रुद्धादिपरिग्रहः। वैयाकरणत्वं चात्र न व्याकरणगाढज्ञानवत्त्वमात्रम्, 'सोऽध्यैष्ट वेदान्'–इत्यत्र (२२४ पृष्ठे) तादृशभट्टिकारवक्तृके श्रुतिकटुत्वदोषोदाहरणत्वानुपपत्तेः; किं तु स्ववैयाकरणत्वप्रतिपिपादयिषया प्रवृत्तत्वम्।

---

१ केवला प्रत्ययरहिता॥ २ प्रतिपादितमिति। प्रथमे स्वायत्तत्वाभाव, द्वितीयेऽर्थाऽविवक्षा, तृतीये कविसमयलङ्घनस्यानुकारिण्यप्रसक्तेरित्येतद्दोषप्रतिपादनावसरे प्रतिपादितम्। इहापि वैरस्याभावरूपमप्युक्तमिति भावः॥ ३ अनुकार्य इवानुकरणेऽपीति यावत्॥

क्रमेणोदाहरणम्,

दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते॥
यदा त्वामहमद्राक्षं पदविद्याविशारदम्।
उपाध्यायं तदाऽस्मार्षं समस्प्राक्षं च सम्मदम्॥

---

प्रपञ्चितमिदं प्राक् 'सोऽध्यैष्ट'–इत्यत्रेत्यवगन्तव्यम्। तथा च 'वैयाकरणे वक्तरि'–इत्यस्य स्ववैयाकरणत्वं प्रतिपिपादयिषौ वक्तरीत्यर्थः। रौद्रादाविति। आदिपदात् वीर-बीभत्सयोः परिग्रहः। कष्टत्वम्। अर्थस्य दुरूहत्वम्, शब्दस्य श्रुतिकटुत्वं च। गुण-इति। प्रतिपाद्यस्य वैयाकरणत्वस्य ततोऽतिशयेन प्रतीतेरिति भावः। दोषत्वाभावश्च श्रोतुरनुद्वेगादिति तदवसरे प्रतिपादित एवेति प्रदीपोद्द्योतादौ स्पष्टम्॥

क्रमेणेति। वक्त्रादिक्रमेणेत्यर्थः। तत्र वैयाकरणे वक्तरि सति कष्टत्वरूपदोषस्य गुणत्वमुदाहरति दीधीङ्वेवीङिति। अस्मिन् ग्रामे कीदृशा लोका इति प्रश्नस्योत्तर-मिदम्। कश्चित् पुरुषः, दीधीङ्वेवीङिति धातुद्वयम् "दीधीङ् दीप्तिदेवनयोः"–इति "वेवीङ् वेतिना तुल्ये"–इति धातुपाठात्, ताभ्यां समः सदृशः। 'दीधीवेवीट्समः'–इति पाठे इडिति आगमः, तैः सम इत्यर्थः। साम्यमेवाह गुणवृद्ध्योरिति। यतः गु-णस्य पाण्डित्यदानशौर्यधैर्यादेः वृद्धेः समृद्धेश्च अभाजनम् अनाश्रयः। धातुपक्षे गुणः "अदेङ् गुणः" (१।१।२)–इति पाणिनिसूत्रपरिभाषितः, वृद्धिः "वृद्धिरादैच्" (१।१।१।)–इति पाणिनिसूत्रपरिभाषिता, तयोरभाजनम्। "दीधीवेवीटाम्" (१।१ ६)–इति सूत्रेण गुणवृद्धिनिषेधात्। नैतावती परा काष्ठा, किं तु कश्चित् पुरुषः क्वि-प्प्रत्ययेन निभः तुल्यः सर्वतः प्राप्तलोप इत्यर्थः। क्विप्प्रत्ययोऽपि तथाभूतः, "वेरपृक्तस्य" (६।१।६७)–इति पाणिनिसूत्रेण लोपविधानादिति भावः। यत्र यस्मिन् पुरुषे सन्निहिते समीपस्थे सति न ते अन्यस्यापि गुणवृद्धी न भवतः। क्विप्प्रत्ययेऽपि सन्निहिते परतो वर्तिनि गुणवृद्धी न भवतः, "क्ङिति च" (१।१।५)–इति पाणिनिसूत्रेण निषेधादिति भावः। अत्र विलम्बेनार्थप्रत्ययेऽपि वक्तुर्व्याकरणव्युत्पत्त्यतिशयप्रतीतेर्गुणत्वमिति भाव इत्युद्द्योतः। केचित्तु पूर्वार्धे शब्दस्य श्रुतिकटुत्वरूपकष्टत्वं गुणः, उत्तरार्धे यथा क्विपः सर्वापहारी लोपस्तथा तस्यापीत्यर्थस्य दुरूहत्वरूपकष्टत्वं गुणः, वक्तुर्वैयाकरणत्वा-दित्याहुः॥

वैयाकरणे प्रतिपाद्ये (बोधनीयजने) कष्टत्वरूपदोषस्य गुणत्वमुदाहरति यदा त्वामिति। पदानां सुप्तिङन्तानां विद्या शास्त्रं व्याकरणशास्त्रमित्यर्थः, तत्र विशारदं निपु-

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम्।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥

णम्, 'शब्दविद्याविशारदम्'—इति पाठेऽपि स एवार्थः। त्वाम् अहं यदा अद्राक्षं दृष्टवान्, तदा उपाध्यायं गुरुम् अस्मार्षं (सादृश्यात्) स्मृतवान्। सम्मदं हर्षं च समस्राक्षं संस्पृष्टवान् प्राप्तवानस्मीत्यर्थः। "मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः"—इत्यमरः। अत्र 'शब्दविद्याविशारदं त्वाम्,—इति वैयाकरणस्य संबोध्यत्वेनोक्तत्वाद्वैयाकरणः प्रतिपाद्यः, तस्मिन् श्रुतिकटुत्वरूपकष्टत्वं गुणः, श्रुतिकटुनानावर्णैर्वैयाकरणसामाजिकस्य वक्तृव्युत्पत्तिज्ञानेन चमत्कारादिति बोध्यम्। उक्तं च प्रदीपकारैः, वैयाकरणादौ प्रतिपाद्ये च तस्य गुणत्वम्, तद्भावनाभावितस्य तच्छ्रवणेन प्रीत्युपचयादिति ॥

रसरूपव्यङ्ग्यमहिम्ना श्रुतिकटोर्गुणत्वमुदाहरति अन्त्रप्रोतेति। उक्तं च प्रदीपेऽपि,—ओजस्विनि रौद्रादिरसे व्यङ्ग्ये च तस्य गुणत्वम्, कठिनशब्दस्य तद्व्यञ्जकत्वात् (१)। तत्र वीभत्से यथा, अन्त्रप्रोतेत्यादीति। वीरचरितनाटके प्रथमाङ्के श्रीरामं प्रति क्रुद्धायास्ताटकायाः लक्ष्मणकर्तृकं वर्णनमिदम्। अत्र प्रकृता ताटका। सा दर्पेण गर्वेण उद्धतम् उद्भटं यथास्यात्तथा धावतीत्यन्वयः। कीदृशी?—अन्त्रैः पुरीतद्भिः अन्त्रेषु वा प्रोतानि ग्रथितानि बृहन्ति महान्ति यानि कपालानि शिरोऽस्थीनि नलिकानि जङ्घास्थीनि च तान्येव क्रूरं यथा स्यात्तथा क्वणन्ति सशब्दानि कङ्कणानि करभूषणानि तत्प्रायाणि तद्बहुलानि प्रेङ्खितानि चञ्चलानि यानि भूरिभूषणानि ग्रैवेयकाङ्गदादीनि तेषां रवैः शब्दैः (करणैः) अम्बरम् आकाशम् आघोषयन्ती समन्ताच्छब्दायमानं कुर्वन्ती, प्रतिध्वनिव्याप्तं कुर्वन्तीत्यर्थः। तथा, पूर्वं पीतं पश्चात् छर्दितं वान्तं यत् रक्तं रुधिरं तदेव कर्दमः पङ्कस्तेन घनो व्याप्तो यः प्राग्भार उत्तरकायस्तत्र घोरं यथा स्यात्तथा उच्छ्लसन्तौ विपुलतया व्यक्तं दृश्यमानौ व्यालोलौ वेगवशाच्चलन्तौ यौ स्तनौ तयोर्भारेण भैरवं भयंकरं वपुः शरीरं यस्यास्तथाभूता। 'प्राग्भार'—इत्यत्र प्राघारेति पाठे रक्तकर्दमस्य घनप्राघारो निरन्तरक्षरणं (अविरतधारा) तेन घोराविति स्तनविशेषणम्। "अन्त्रं पुरीतत्"—इत्यमरः। शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तं प्राक् (९ पृष्ठे)।

अत्र वीभत्सस्य व्यङ्ग्यत्वात्कष्टत्वं गुणः। सारबोधिनीकारास्तु, अत्रोद्भटा वर्णा ओजो व्यञ्जयन्तः प्रकृतरौद्रवीभत्सयोरानुगुण्यमादधते इत्याहुः ॥

१ तद्व्यञ्जकत्वादिति। तद्गतौजोगुणव्यञ्जनद्वारेति भाव इत्युद्द्योत. ॥

वाच्यवशाद्यथा,

मातङ्गाः! किमु वल्गितैः, किमफलैराडम्बरैर्जम्बुकाः!
सारङ्गाः! महिषाः! मदं व्रजत किं, शून्येषु शूरा न के।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत् तद्गर्जितं गर्जितम्॥

अत्र सिंहे वाच्ये परुषाः शब्दाः॥ प्रकरणवशाद्यथा,

रक्ताशोक! कृशोदरी क्व नु गता त्यक्त्वाऽनुरक्तं जनं?
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः?।

---

वाच्यमहिम्ना कष्टत्वस्य गुणत्वमुदाहरति मातङ्गा इति। उक्तं च प्रदीपेऽपि,—ओजस्विनि सिंहादौ वाच्येऽपि तस्य गुणत्वम्, यतो मसृणशब्दप्रयोगेनोर्जितोऽप्यर्थो मृदुवद्भासते, ऊर्जितशब्दप्रयोगे त्वौर्जित्येन। उदाहरणम्, मातङ्गा इत्यादीनि। हे मातङ्गाः वल्गितैः गतिविशेषैः किमु 'प्रयोजनम्'—इति शेषः। बृंहितैरिति पाठे गर्जितैरित्यर्थः। यद्यपि "बृंहितं करिगर्जितम्"—इति कोशस्तथापि विशिष्टवाचकानां पदानां पृथग्विशेषणसमवधाने विशेष्यमात्रपरत्वमिति नियमात्प्रकृते गर्जितमात्रपरत्वं बोध्यम्। हे जम्बुकाः शृगालाः अफलैः व्यर्थैः आडम्बरैः किम्। "आडम्बरः समारम्भे फेरुगर्जितमुर्ययोः"—इति विश्वः। हे सारङ्गाः मृगाः, तथा, हे महिषाः मदं गर्वं किं किमर्थं व्रजत। शून्येषु बलवद्रहितेषु स्थानेषु के न शूराः, अपि तु सर्वेऽपीत्यर्थः। तथा न शूरत्वख्यापनार्थमपि नैतदुचितमिति भावः। 'शून्येऽथ शूरा न के'—इति पाठे अथशब्दः प्रश्नार्थकः। किं तर्हि सार्थकं तत्राह कोपेत्यादि। कोपस्य च आटोपः उद्रेकस्तेन समुद्भटा उत्कटा उत्थिताः सटानां ग्रीवारोम्णां कोटयोऽग्रभागाः यस्य तथाभूतस्य इभारेः सिंहस्य सिन्धुः समुद्रस्तस्येव ध्वानिनि ध्वनिशालिनि हुङ्कृते हुङ्कारे पुरः अग्रे स्फुरति सति यद्गर्जितं तदेव गर्जितं सफलगर्जितमित्यर्थः। चन्द्रिकाकारास्तु, तत् गर्जितं सार्थकमित्यर्थः, द्वितीयगर्जितपदस्य सार्थकत्वविशिष्टलाक्षणिकत्वात्। सफलगर्जितत्वरूपार्थान्तरसंक्रमितवाच्यं तु न युक्तम्, गर्जितान्तरस्याफलत्वेन पूर्वमुक्तत्वादित्याहुः। शार्दूलविक्रीडितं छन्दः।

अत्र सिंहरूपवाच्यौचित्यात्तदभिधाने कष्टत्वं गुण इत्याह अत्र सिंहे इति। अत्र सिंहे ओजस्विनि वाच्ये तन्निष्ठौजोगुणप्रकाशकाः दीर्घसमासविकटवर्णा अनुगुणा इति भावः॥

कष्टत्वस्य प्रकरणमहिम्ना गुणत्वमुदाहरति रक्ताशोकेति। विक्रमोर्वशीये चतुर्थेऽङ्के विरहिणः पुरूरवस उक्तिरियम्। एवमेव वैद्यनाथनागोजीभट्टादयः। वस्तुतस्त्विदं पद्यं केनु-

उत्कण्ठाघटमानपट्पदघटासंघट्टदष्टच्छद—
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ? ॥

अत्र शिरोधूननेन कुपितस्य वचसि ॥

क्वचिन्नीरसे न गुणो न दोषः, यथा,

---

चिज्जीर्णपुस्तकेषु, अङ्कितपुस्तके च नोपलभ्यते, तथाऽप्यपातत एव तदिति बोध्यम्, अङ्कितपुस्तके (१२० पृष्ठे) पाठभेदरूपेणास्य प्रदर्शितत्वात् । हे रक्ताशोक रक्तस्तद्वर्णोऽशोको वृक्षविशेषः, रक्तानामनुरक्तानां (मादृशानां) अशोको यस्मादिति व्युत्पत्त्याऽनुरक्तशोकापनोदकश्च । अनुरक्तं जनं मद्रूपं त्यक्त्वा कृशोदरी उर्वशी क्व नु गतेत्यन्वयः । वातचालितां तदग्रशाखां दृष्ट्वा पुनराह नो दृष्टेतीति । इतीत्यनन्तरं 'सूचयितुम्'—इति शेषः । वातेनावधूतं कम्पितं शिरः मुधैव वृथैव मिथ्यैवेति यावत्, किं कुतः चालयसि । वातावधूतस्यैव शिरसः क्रोधाद्वातव्याधिकम्पितत्वेनोक्तिः । मिथ्यात्वं समर्थयति उत्कण्ठेत्यादि । तस्याः कृशोदर्याः पादाहतिं पादघातम् अन्तरेण विना भवतः तवायम् अदृष्टपूर्वः पुष्पोद्गमः पुष्पोदयः कुतः कथं जात इत्यर्थः । "स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति, वकुलः सीधुगण्डूपसेकात्, पादाघातादशोकः, तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्मवाक्यात्, पटुमधुहसनाच्चम्पको, वक्त्रवाताच्चूतो, गीतान्नमेरुः, विकसति च पुरो नर्तनात्कार्णिकारः ॥"—इति प्रसिद्धेरिति भावः । कीदृशः पुष्पोद्गमः ?—उत्कण्ठाघटमाना उत्कण्ठायुक्ताः उत्कण्ठया घटमानाः मिलिता वा ये पट्पदाः भ्रमरास्तेषां या घटा समूहस्तस्य यः संघट्टः गाढमिलनं यत्र, स चा सौ, (अर्थात् तैरेव मकरन्दाप्राप्त्या) दष्टच्छदः खण्डितदलश्चेत्यर्थः । शार्दूलविक्रीडितं छन्दः ।

अत्र मिथ्या शिरोवधूननेन कोपप्रकरणम्, तदौचित्यात्कष्टत्वं गुण इत्याह अत्रेत्यादि । अयं भावः, अत्र प्रकरणगम्यविप्रलम्भानौचित्येऽपि प्रस्तुतशिरोधूननप्रतिपादितदर्शनालापप्रादुर्भूतक्रोधप्रकर्षकत्वाद्दीर्घसमासविकटवर्णयोर्गुणत्वम्, तेनाङ्गस्य क्रोधस्य प्रकर्षादङ्गिनो विप्रलम्भस्यापि प्रकर्ष इति । न चास्य व्यङ्ग्यौचित्ये एव प्रवेशः कोपस्य व्यङ्ग्यत्वादिति वाच्यम्, वक्त्राद्यौचित्यव्यतिरिक्तस्थानीयस्य व्यङ्ग्यस्य व्यङ्ग्यपदेनोपादानात् गोबलीवर्दन्यायात् । दोषत्वाभावश्चैतेषु गुणप्राप्तेः स्फुट एवेति प्रदीपोद्द्योतयोः स्पष्टम् ॥

इत्थं "दोषोऽपि क्वचिद्गुणः"—इत्यस्य सविस्तरमुदाहरणं प्रदर्श्य, संप्रति "क्वचिन्न दोषो न गुणः"—इत्यस्योदाहरणं प्रदर्शयन्नाह क्वचिदिति । क्वचिदिति व्याचष्टे नीरसे इति । शृङ्गारादिरसशून्ये, न तु निरास्वादे इत्यर्थः, निरास्वादे काव्यताविरहा-

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः, पुनरपि घटयत्येक उल्लाघयन् यः।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥

---

दिति भावः। न गुणो न दोष इति। कष्टत्वस्य पुनर्न दोषत्वं न वा गुणत्वम्, यत्र न रसो न वा प्रतिपाद्यार्थौचित्यमिति भावः। अथ नीरसे यदि विघातस्य रसस्याभावात्कष्टत्वस्यादोषत्वं तदाऽन्येषामपि (१) स्यात्। तथा च नीरसदोषोदाहरणं विरुद्धञ्चेतेति चेत्, न, तस्य (नीरसदोषोदाहरणस्य) उपलक्षणत्वात् (२), दोषपरिचयमात्रार्थत्वाद्वेति प्रदीपे स्पष्टम्।

शीर्णघ्राणेति। मयूरकविकृते सूर्यशतके सूर्यस्तुतिरियम्। तस्य घर्मांशोः सूर्यस्य घृणयः किरणाः वः युष्माकम् अंहसां पापानां विघातं नाशं शीघ्रं विदधतु कुर्वन्त्वित्यन्वयः। स कः?—यः एकः असहायः (साधननिरपेक्षः), अघौघैः पापसमूहैः, घ्राणं नासिका च अङ्घ्री चरणौ च पाणी हस्तौ च एषां समाहारो घ्राणाङ्घ्रिपाणि, शीर्णं विगलितं घ्राणाङ्घ्रिपाणि येषां तान्; तथा, व्रणिभिः व्रणयुक्तैः "घृणिभिः"—इति पाठे जुगुप्साविषयैः अपघनैः अङ्गैः (शेषावयवैः) उपलक्षितान्; उपलक्षणे तृतीया। अत-एव, (दुःखात्) घर्घरः बलवद्वारिध्वनिस्तद्वत् अव्यक्तः वर्णप्रतिभारहितः घोषः शब्दो येषां तथाभूतान्; तथा, दीर्घम् आघ्रातं श्वासो येषां तान्; यद्वा,-अघौघैः दीर्घाघ्रातान् दृढव्याप्तान् एवंविधान् गलत्कुष्ठिनो जनान् उल्लाघयन् नीरोगीकुर्वन् पुनरपि घटयति भूयोऽपि नवीकरोतीत्यर्थः; घ्राणादिभिर्नूतनावयवैः संबध्नातीति यावत्। कीदृशस्य घर्मांशोः?—अन्तः हृदये द्विगुणा घना निविडा या घृणा कृपा तन्निघ्ना तदायत्ता निर्विघ्ना विघ्नरहिता (विघ्ननाशिनी) निरपवादा वा वृत्तिर्व्यवसायश्चित्तस्वभावो वा यस्यैवंभूतस्य। कीदृशाः घृणयः?—सिद्धानां संघैः समूहैः दत्ता अर्घा येषां तथाभूता इत्यर्थः। अङ्गं प्रतीकोऽवयवोऽपघनः"—इत्यमरः। "घर्घरो बलवद्वारिध्वानः"—इति विश्वः। "उल्लाघो निर्गतो गदात्" इत्यमरः। स्रग्धरा छन्दः। लक्षणमुक्तं प्राक् (११२ पृष्ठे)।

शब्दचित्रेऽस्मिन् काव्ये सतोऽपि कविनिष्ठसूर्यविषयकभावस्य न प्राधान्यमिति नीर-

---

१. अन्येषामपीति। अश्लीलादिदोषाणां रसापकर्षकत्वाभावेऽदोषत्वं स्यात्। ... नीरसदोषोदाहरणमयुक्तम्। यथाऽश्लीले "साधनं सुमहद्यस्य" (३१० पृष्ठे ...) इति। तथा "... " (... ...)—इत्यादि श्रुतिकटूदाहरणमपि नीरसत्वादयुक्तमिति ... । मात्रपदेन ... ... ... प्रभा ॥ २ उपलक्षणत्वादिति। दोषपरिचयमात्रार्थत्वादिति भाव इत्युद्योतः ॥

अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टौ (१), यथा,

येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः,
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥

अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थौ ॥

---

सत्वव्यपदेशः । न च सूर्यस्य दयावीरत्वेन दयावीररसस्य सत्त्वात्सरसत्वमिति वाच्यम्, अनुप्रासमात्रलग्नत्वेन कवेस्तत्र तात्पर्याभावात्; दयावीरस्य ग्रन्थकृताऽनङ्गीकाराच्च (२) । तथा चात्रानुप्रासैकपरतया नीरसत्वात्कष्टत्वं न गुणो न दोष इति बोध्यम् । व्याख्यातं च प्रदीपोद्द्योतयोः, नीरसत्वं चात्रानुप्रासमात्रलग्नतया रसे (३) तात्पर्याभावात् । न चानुप्रासास्पदैकतयैव गुणत्वम्, 'सोऽध्यैष्ट वेदान्' (३३४ पृष्ठे)—इत्यादावपि तदापत्तेरिति । न च परुषवर्णत्वमनुप्रासे प्रयोजकम्, येन तद्घटकतयाऽदोषत्वं स्यादिति प्रदीपः । न च कविनिष्ठसूर्यविषयकभावस्यौजस्व्यालम्बनकत्वेनौजस्वितया तद्गतौजोगुणव्यञ्जकत्वेन गुणत्वम्, भावेषु गुणानङ्गीकारादिति संप्रदाय इत्युद्द्योतः ॥

"क्वचिन्न दोषो न गुणः"—इत्यस्योदाहरणान्तरं दर्शयन्नाह अप्रयुक्तेति । श्लेषादाविति । आदिपदग्राह्यं यमकादि । अदुष्टाविति । यदि च प्रयोजनानुसंधानव्यग्रता दुष्टिबीजम्, तथाऽप्यत्र न दोषता, तदलंकारत्वस्य प्रयोजनस्य प्रतीतेर्व्यग्रताभावादिति प्रदीपः । उद्द्योतकारास्तु, यद्यपि पदार्थोपस्थितिविलम्बो दुष्टिबीजम्, तथाप्यत्रादोषता, तदलंकारविषये प्रतीत्यविलम्बस्यानुद्देश्यत्वादित्याहुः । प्रतिपादितं चैतदप्रयुक्तव्याख्यावसरेपि (३०२ पृष्ठे)—इति बोध्यम् ।

तत्र श्लेषे अप्रयुक्तनिहतार्थयोरदोषत्वमुदाहरति येनेति । अत्र विष्णुपक्षे, सः माधवः मा लक्ष्मीस्तस्याः धवः पतिः विष्णुः त्वां स्वयं पायात् रक्षतु । स कः ?—येन अनः शकटं (शकटासुरः) ध्वस्तं पातितम् । "अनः क्लीबं जले शोके मातृस्यन्दनयोरपि"—इति विश्वः । तथा, अभवेन अजन्मना, न भवः संसारो यस्मात्ताद्दशेन वा येन बलिं बलिनामानं दैत्यं जयतीति बलिजित् बलिजयनशीलः (स्वस्य) कायो देहः पुरा अमृतहरणप्रस्तावे स्त्रीकृतः स्त्रीरूपतां प्रापितः, मोहिनीरूपतां प्रापित इत्यर्थः । यश्च उद्वृत्तस्य दृप्तस्य भुजङ्गस्य कालियसर्पस्य हन्ता । रवानां शब्दानां (नाम्नां) लयो यत्र सः ।

---

१ "श्लेषादौ न दुष्टौ"—इत्यपि पाठः ॥ २ स्पष्टीकृतमिदं चतुर्थोल्लासे (११३ पृष्ठे)—इति बोध्यम् ॥ ३ रसे इति । सूर्यस्य दयावीरत्वेन दयावीररसे इत्यर्थः ॥

नामरूपात्मकजगतो ब्रह्मणि लय इति वेदान्तविदनुमतम्। यः अगं गोवर्धनगिरिं गां पृथ्वीं च अधारयत् धृतवान्। श्रीकृष्ण-वराहरूपतया करेण दंष्ट्राङ्कुरेण चेति भावः। अमराः देवाः यस्य शशिनं मथ्नातीति शशिमत् राहुस्तस्य शिरो हरतीति शशिमच्छिरोहर इति स्तुत्यं स्तवनीयं नाम नामधेयम् आहुः। अन्धकाः यादवास्तेषां क्षयं निवासं द्वारकारूपं गृहं कृतवान्। सर्वदः सर्वदाता, चतुर्वर्गप्रद इत्यर्थः।

शिवपक्षे तु, स उमाधवः सर्वदा सर्वकाले त्वां स्वयं पायात्। ध्वस्तमनोभवेन नाशितकन्दर्पेण येन पुरा त्रिपुरनामकदैत्यवधकाले बलिजितो नारायणस्य कायः अस्त्रीकृतः बाणरूपतां प्रापितः। उक्तंच, "रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति"—इति। यश्च उद्वृत्ता उद्धता ये भुजङ्गाः वासुक्यादय एव हाराः वलयानि च यस्य तादृशः। यः गङ्गां भागीरथीम् अधारयत्, उत्तमाङ्गेनेति शेषः। यस्य शिरो मस्तकं शशिमत् चन्द्रयुतम्। यस्य हर इति ब्रह्मादिसंहारकत्वेन स्तुत्यं नामामरा आहुः। यः अन्धकनामकदैत्यस्य क्षयो नाशस्तत्कर्तेत्यर्थः।

प्रदीपे तु "योगङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रिय"—इति द्वितीयचरणपाठः, "सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः"—इति चतुर्थचरणपाठश्च दृश्यते। तत्र, बर्हिपत्रप्रियः मयूरपिच्छधारकः। इष्टभुजङ्गहा भुजङ्गान् हन्तीति भुजङ्गहा गरुडः स इष्टो (वाहनतया) अभीष्टो यस्य तादृश इति विष्णुपक्षेऽर्थः। शिवपक्षेतु, बर्हो मयूरः पत्रं वाहनं यस्य स बर्हिपत्रः कार्तिकेयः प्रियो यस्य तादृश। तथा, इष्टानि भुजङ्गाना हारवलयानि यस्य तथाभूत इत्यर्थः। शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तं प्राक् (९पृष्ठे)।

अत्र माधवपक्षे (विष्णुपक्षे) शशिमत्पदस्य राहौ अप्रयुक्तत्वम्, क्षयपदस्य गृहे निहतार्थत्वं न दोषः, श्लेषनिर्वाहकत्वात्। तदेवाह अत्रेत्यादि। व्याख्यातमिदं प्रदीपोद्द्योतादावपि,—अत्र माधवपक्षे राहौ शशिमत्पदमप्रयुक्तम्, क्षयपदं गृहे निहतार्थम्; तथापि श्लेषालंकाराय गृहीतत्वादनयोरदुष्टत्वम्। न च श्लेषालंकारप्रयोजकतया गुणत्वमपीति शङ्कनीयम्, अप्रयुक्त-निहतार्थत्वस्यालंकारेऽप्रयोजकत्वात्। एतेन निरर्थकस्यानुप्रासनिष्पादकत्वेन क्वचिद्गुणत्वमित्यपास्तम्, नैरर्थक्यस्य तत्राप्रयोजकत्वात्, सार्थकेनापि तन्निष्पादनादिति बोध्यम्। एवमन्येष्वपि प्रतीतिविलम्बवत्सु द्रष्टव्यमिति। सरस्वतीतीर्थास्तु, अन्धकक्षयशब्दो निहतार्थः, अन्धकशब्दस्य यादवेभ्योऽपि दैत्यविशेषे, क्षयशब्दस्य निवासादपि विनाशे प्रसिद्धिबाहुल्यादित्याहुः॥

अश्लीलं क्वचिद्गुणः, यथा, सुरतारम्भगोष्ठ्याम्,
( "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु"—इति कामशास्त्रस्थितौ ),

करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥

शमकथासु,

---

अश्लीलस्य प्रतिप्रसवमाह अश्लीलमित्यादि । सारबोधिनीकारास्तु, असमर्थानुचितार्थनिरर्थकावाचकानां नित्यदोषत्वेन तानपहायाश्लीलप्रतिप्रसवमाहेत्याहुः । सुरतेति । सुरतारम्भाय गोष्ठ्यां वार्तायामित्यर्थः । गुणत्वे हेतुमाह द्व्यर्थैरित्यादि । "ताम्बूलदानविधिना(१) विसृजेद्वयस्यां द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु"—इति कामशास्त्रस्य वात्स्यायनादिकृतस्य स्थितौ सत्यामित्यर्थः । "दोषत्वाभावे व्युत्पत्तिप्रकटनात्"—इति शेषः। एवं चोदासीनवञ्चनया स्वार्थसंपत्त्या च रसोत्कर्षकत्वाद्गुणत्वं बोध्यम् ।

त्रिविधेष्वश्लीलेषु व्रीडाव्यञ्जकस्याश्लीलस्य गुणत्वमुदाहरति करिहस्तेनेति । पुंसः वीरस्य ध्वजः केतुः साधनस्य सैन्यस्यान्तः मध्ये उपसर्पन् प्रविशन् विराजते शोभते इत्यन्वयः । कीदृशे साधनान्तः ?— संबाधे नराश्वादिभिः संकटे । तथा, करिणां गजानां हस्तेन शुण्डया अन्तः प्रविश्य विलोडिते सावकाशे कृते इति प्रकृतपक्षेऽर्थः ।

अत्र ( पुंसः कामिनः ध्वजः लिङ्गं साधनस्य मदनमन्दिरस्य ( वराङ्गस्य ) अन्तः मध्ये उपसर्पन् प्रविशन् गतागतं कुर्वन्वा विराजते । कीदृशे साधनान्तः ? — संबाधे संकुचिते । कथं तर्हि उपसर्पणं तत्राह करिहस्तेनेति । करिहस्तो नाम कठिनयोनिशैथिल्यापादको बहिष्कृतमध्यमाङ्गुलीयकः संयुक्ततर्जन्यनामिकारूपः । तदुक्तम्, "तर्जन्यनामिके युक्ते ( २ ) मध्यमा स्याद्बहिष्कृता ( ३ ) । करिहस्तः समुद्दिष्टः (४) कामशास्त्रविशारदैः ॥"— इति । तेन करिहस्तेन अन्तः प्रविश्य विलोडिते विकाशिते क्लेदिते वा— इति )— गुप्तोऽश्लीलार्थो "द्व्यर्थैः पदैः"— इति कामशास्त्रेण सुरतारम्भोपयुक्तवार्तायामनुमतत्वाद्गुणः । व्याख्यातं च सुधासागरेऽपि,— अत्र करिहस्तादिपदेष्वश्लीलेष्वपि कामशास्त्रमर्यादयाऽदोषत्वम्, व्युत्पत्तिप्रकटनेनोदासीनवञ्चनया स्वार्थसंपत्त्या रसोत्कर्षकतया च गुणत्वं बोध्यमिति ॥

शमकथास्वपि अश्लीलस्य गुणत्वमित्याह शमकथास्विति । 'अश्लीलं गुणः'—इत्य-

---

१ वयस्यां सखीं ताम्बूलदानविधिना विसृजेत्, तथा, द्व्यर्थैः अनेकार्थैः पदैः रहस्य गोप्यं वस्तु योनिलिङ्गादिकं पिशुनयेत् सूचयेदित्यर्थः ॥ २ युक्ते संयुक्ते, श्लिष्टे इति यावत् ॥ ३ "मध्यमा पृष्ठतस्तयोः"—इति पाठान्तरम् ॥ ४ "करिहस्त इति प्रोक्तः"— इति पाठान्तरम् ॥

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे।
क्लेदिनि स्त्रीव्रणे सक्तिरक्रमेः कस्य जायते॥

निर्वाणवैरदहनाः प्रशमादरीणां,
नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥

अत्र भाव्यमङ्गलसूचकम्॥

---

नुषङ्गः। शमाय वैराग्याय कथासु वार्तास्वपि अश्लीलं गुणस्तत्पोषकत्वादित्यर्थः। वैराग्यहेतुघृणोत्पादनादिति भावः। जुगुप्साश्लीलस्य गुणत्वमुदाहरति उत्तानेति। उत्तानः वैपरीत्येन स्थितः उच्छूनः शोफवांश्च यो मण्डूकः भेकस्तस्य पाटित विदारितं यद् उदर तत्सन्निभे तत्तुल्ये, क्लेदिनि क्लिन्ने (स्रवन्मन्मथजले), स्त्रीव्रणे योनिरूपे (वराङ्गरूपे) कस्य अक्रमेः क्रमिभिन्नस्य सक्तिः आसक्तिः जायते इत्यर्थः। तदासक्त. क्रमिरेवेति भावः।

अत्र शान्तिकथायां जुगुप्साश्लीलं गुणः वैराग्यहेतुघृणोत्पादनादिति बोध्यम्॥

अमङ्गलव्यञ्जकस्याश्लीलस्य भाव्यर्थसूचकतया गुणत्वमुदाहरति निर्वाणेति। वेणीसंहारे प्रथमाङ्के सूत्रधारस्योक्तिरियम्। पाण्डुतनयाः युधिष्ठिरादय अरीणा शत्रूणां प्रशमात् युद्धनिवृत्तेः शान्त्यवलम्बनाद्वा निर्वाणः शान्तो वैरमेव दहनोऽग्निर्येषां तथाभूताः सन्तः माधवेन श्रीकृष्णेन सह नन्दन्तु समृद्धा भवन्तु। तथा, सभृत्याः कुरुराजसुताः दुर्योधनादयः रक्ताऽनुरक्ता प्रसाधिता प्रकर्षेण साधिता (वशीकृता) न भूर्यैस्तादृशाः क्षतो निवृत्तो विग्रहः कलहो येषा ते क्षतविग्रहाः खण्डितयुद्धाश्च सन्त. स्वीयप्रकृतौ तिष्ठन्तीति स्वस्थाः सुखिनो भवन्तु—इति प्रकृतपक्षेऽर्थ.। वसन्ततिलका छन्द'। लक्षणमुक्तं प्राक् (६४ पृष्ठे)।

अत्र 'प्रशमात् नाशात्। रक्तं रुधिर तेन प्रसाधिताऽलंकृता भूर्यैस्तादृशा', क्षताः विग्रहाः खण्डितशरीराश्च सन्तः स्वस्थाः स्वर्गस्थाः (१) भवन्तु'—इत्यमङ्गलार्थां व्यञ्जनं। इदं चामङ्गलाश्लीलं भाव्यर्थसूचकतया गुणः। तदेवाह अत्र भाव्येति। व्याख्यानं च प्रदीपोद्द्योतयोरपि,—अत्र प्रशमादिति स्वस्था इति मरणार्थकत्वादश्लीलेऽपि भाव्यमङ्गलसूचनाद्गुणः। दुर्योधनामङ्गलस्य नायकमङ्गलत्वेन गुणत्वं बोध्यम्। एवम् "संवीतेना क्वचिद्विज्ञैरश्लीलस्याप्यदोषता। प्रसिद्धपादशब्दादौ (२) क्वचिद्वाऽऽशंसिते तथा॥" अ-

---

१ अत्र वैकल्पिकविसर्गलोपात्प्र वैरूप्यम्॥ २ पादशब्दस्य [illegible] श्लीलत्व प्राप्तम्॥

**संदिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्यवसायित्वे गुणः, यथा,**

**पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव! ।**
**विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥**

---

दिना शिवलिङ्गादि। द्वितीयं (लाक्षणिकं) यथा, 'अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्'—इत्यादाविति।

अत्रोद्द्योतकाराः,—असाध्वसमर्थानुचितार्थावाचकनिरर्थकविरुद्धमतिकृन्नेयार्थाविमृष्टविधेयांशास्तु नित्या एवेति बोध्यम्। ननु निरर्थकक्लिष्टविरुद्धमतिकृतोऽनित्याः, "दधार हृदये देवं गौरी हिमकराङ्कितम्। अत्र श्लेषोदयान्नैव त्याज्यं हीति निरर्थकम्"— इति जयदेवोक्तेः, क्लिष्टं मत्तोक्त्यादौ गुण इति प्रदीपोक्तेश्च, एवं विरुद्धमतिकृतोऽपीति चेत्, न, वृत्तनिर्वाहमात्रप्रयोजनकस्य निरर्थकस्यात्रात्मलाभाभावात्। तस्मान्निरर्थकं नित्यदोष एव। प्रकृतप्रतीतिन्यक्कारकप्रतीतिजनकं हि विरुद्धमतिकृत्, न्यक्कारकप्रतीतेर्विवक्षितत्वे तु तस्यात्मलाभ एव नेति तस्यापि नित्यत्वम्, अयमेव तत्रत्यप्रदीपाशयः, अनित्यमेवेदमित्यन्ये, क्लिष्टं त्वनित्यमेवेति दिगित्याहुः॥

संदिग्धस्यापि क्वचिद्गुणत्वमित्याह **संदिग्धमपीति**। संदेहश्चापातत इति शेषः। कुत इत्यत आह **नियतार्थेति**। प्रकृतार्थेत्यर्थः। **प्रतीतिः** निश्चयः तत्कृत्त्वेन तत्कारित्वेन। तत्करणे हेतुः **वाच्यमहिम्नेति**। वाच्यो वर्णनीयो राजादिस्तस्य महिम्नेत्यर्थः। तावता दोषत्वाभावः, गुणत्वे हेतुमाह **व्याजेति**। संपत्तिबाहुल्येन राजोत्कर्षप्रतीतेर्व्याजस्तुतेर्भावोत्कर्षकतया गुणत्वादिति भावः।

उदाहरति **पृथुकेति**। राजानं प्रति कवेरुक्तिरियम्। हे देव राजन् संप्रति अधुना आवयोः सदनं गृहं समं तुल्यमित्यन्वयः। त्वत्तो धनलाभानन्तरं न सममिति संप्रतिपदाभिप्रायः। साम्यमेव श्लिष्टविशेषणैराह पृथ्वित्यादि। राजसदनपक्षे—पृथूनि विपुलानि कार्तस्वरस्य सुवर्णस्य पात्राणि भाजनानि यत्र तत्। तथा, भूषिता अलंकृताः निःशेषाः सकलाः परिजनाः परिचारकजनाः ( सेवकाः ) यत्र तत्। तथा, विलसन्त्यः शोभमानाः करेणवः करिण्यस्ताभिः गहनं संकीर्णम् ( व्याप्तम् )—इत्यर्थः। कविसदनपक्षेतु—पृथुकानां शिशूनामार्तस्वरस्य क्षुद्बाधाकृतकातरध्वनेः पात्रमधिकरणम्। भुवि धरायाम् उषिताः निःशेषाः परिजनाः परिवारजनाः यत्र तत्। बिले (वबयोरभेदात्) विले (छिद्रे) सीदन्तीति विलसत्काः मूषकाः ( कुत्सायां स्वार्थे वा कन् प्रत्ययः ) तेषां रेणुभिः धूलिभिः गहनं व्याप्तम्। यद्वा, विले सत् विद्यमानं कं जलं रेणुश्च ताभ्यां गहनमित्यर्थः। आर्या छन्दः। लक्षणमुक्तं प्राक् ( २ पृष्ठे )।

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतं गुणः, यथा,

> आत्मारामा विहितरतयो निर्विकल्पे समाधौ,
> ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
> यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्,
> तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥

---

अत्र पृथुकार्तस्वरपात्रमित्यादीनि विशेषणानि 'पृथूनि कार्तस्वरस्य पात्राणि यत्र तत्' इत्याद्यर्थकानि, अथवा 'पृथुकानामार्तस्वरस्य पात्रमित्याद्यर्थकानि' इति सन्देहात्संदिग्धानि तथाप्यत्रोक्तविशेषणाना योग्यतया तत्तत्पक्षानुकूलार्थनिर्णयाद्व्याजस्तुति-निर्वाहकतया संदिग्धं गुण इति चन्द्रिकादौ स्पष्टम् । सुधासागरकारा अपि, राजकव्यो-रुभयोरपि प्रस्तुतत्वात् पृथुकार्तस्वरादिशब्दा आपाततः संदिग्धा अप्यत्र वाच्यमहिम्ना वाच्यो वर्णनीयो राजा, न तु कविः, अकिंचित्करत्वात्, राजवर्णनस्य दैन्यनाशकत्वाच्चेति तन्महिम्ना नियतो नियमितोऽर्थो राजानुरूपोत्कर्षरूपस्तस्य प्रतीति निश्चयं कृत्वैव व्याजस्तुतिपर्यवसायित्वाद्गुणतां प्राप्ता इति ध्येयमिति व्याचख्युः । ननु नृपविषयकभाव-स्यारसत्वेन 'शीर्णघ्राण०' (१७१ पृष्ठे)–इत्यादाविवानुभयत्वप्राप्तौ कथं गुणत्वमिति चेत्, मैवम्, भावस्य माधुर्यौजोरूपगुणविरहेण श्रुतिकटुप्रभृतीना गुणव्यञ्जकानां तथात्वात्; व्याजस्तुतेरलंकारस्य भावोत्कर्षकत्वेन गुणत्वाविरोधादिति विस्तारिकादौ व्याख्यानम् ॥

अप्रतीतस्यापि क्वचिद्गुणत्वमुदाहर्तुमाह प्रतिपाद्येति । प्रतिपाद्यः शब्दप्रयोगोद्देश्यः, प्रतिपादको वक्ता, तयोः, वक्तृश्रोत्रोरिति यावत् । ज्ञत्वे तज्ज्ञत्वे (तच्छास्त्रपटुत्वे) स-तीत्यर्थः । गुणइति । अर्थाप्रतीतिरूपबीजाभावेनादोषताया सत्या व्युत्पत्तिप्रकर्षद्योतकत्वादिति भावः । आत्मारामा इति । वेणीसंहारे प्रथमाङ्के श्रीकृष्णबन्धनोद्यतं दुर्योधनं श्रुत्वा "किं दुर्योधनः श्रीकृष्णस्वरूपं न जानाति"– इति पृच्छन्तं सहदेवं प्रति भीमसेन-स्योक्तिरियम् । मोहेनाज्ञानेनान्धः वस्तुतत्त्वप्रतिपत्तिरहितः अयं दुर्योधनः पुरागं सदने-रपि प्राग्वर्तिनं तम् अमुं देवं श्रीकृष्णं कथं वेत्ति केन प्रकारेण जानातीत्यन्वयः, न क-थमपि वेत्तीति भावः । तं कः? आत्मनि चिदानन्दे आरमन्ति(१) प्रत्याहृतेन्द्रिया सन्त-स्तदेकताना भवन्तीत्यात्मारामाः, यद्वा, आत्मैवारामः क्रीडास्थानं येषां तादृशाः यो-गिनः निर्विकल्पे आत्ममात्रावलम्बिनि (भेदसंसर्गभानशून्ये) समाधौ योगे, यद्वा, स-माधौ ध्याने (ध्येयध्यात्रोरेकत्वापत्तिरूपे) विहिता कृता रतिः निरन्तरं प्रीतिर्यैस्ता-दृशाः, ज्ञानोद्रेकात् आत्मसाक्षात्कारदार्ढ्येन विघटितो नाशितस्तमोग्रन्थिः मिथ्याज्ञान-

---

१ "व्याङ्परिभ्यो रमः" (१।३।८३)-इति पाणिनिसूत्रेण परस्मैपदम् ॥

**स्वयं वा परामर्शे, यथा,**

**षडधिकदशनाडीचक्रमध्यस्थितात्मा**
**हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः।**
**अविचलितमनोभिः साधकैर्मृग्यमाणः**
**स जयति परिणद्धः शक्तिभिः शक्तिनाथः॥**

---

जन्यः संस्कारो येषां तथाभूताः, सत्त्वनिष्ठाः सत्त्वगुणमात्रविश्रान्ताः सन्तः यं श्रीकृष्णं कमपि वागाद्यगोचरं वीक्षन्ते पश्यन्तीत्यर्थः। 'ध्यायन्ते'—इति प्रदीपे पाठः। कथं त एव पश्यन्तीत्यत्र हेतुगर्भं यत्पदार्थविशेषणमाह तमसामित्यादि। तमसां तामसानां ज्योतिषां राजसानां वा परस्तात् दूरे 'वर्तमानम्'—इति शेषः। रजस्तमस्पृष्टैरलभ्यमिति पर्यवसितोऽर्थः। मन्दाक्रान्ता छन्दः। लक्षणमुक्तं प्राक् (७३ पृष्ठे)।

अत्र निर्विकल्पादिशब्दा आत्ममात्रावलम्बनत्वादावर्थे योगशास्त्रमात्रप्रसिद्धत्वेनाप्रतीताः, तथाप्यत्र प्रतिपाद्यप्रतिपादकौ सहदेवभीमसेनौ, तौ च योगशास्त्रज्ञाविति प्रतीतिविलम्बाभावान्नदोषत्वम्, इतराज्ञातज्ञातृत्वेन स्वज्ञानद्वारा भावोत्कर्षकत्वाद्गुणत्वं चेति बोध्यम्। अत्र प्रतिपाद्यप्रतिपादकपदाभ्यां सामाजिकवक्तारौ च विवक्षितौ, एतेन सामाजिकस्य रसोद्बोधात्तयोस्तज्ज्ञत्वमकिंचित्करमित्यपास्तमिति प्रदीपोद्द्योतयोः स्पष्टम्॥

सहृदयविमर्शवेलायामपि अप्रतीतस्य गुणत्वमित्याह **स्वयं वेति। परामर्शे इति।** 'अप्रतीतं गुणः'—इत्यनुषङ्गः। उदाहरति **षडधिकेति।** मालतीमाधवे पञ्चमाङ्के कपालकुण्डलिकायाः स्वयं परामर्शोऽयम्। सः मत्परामर्शविषयीभूतो ईश्वरः जयति सर्वोत्कर्षेण वर्तते इत्यन्वयः। स कः?—षड्भिरधिकाः षडधिकाः दश षोडश याः नाड्यः, ताश्च "इडा च पिङ्गला चैव सुषुम्ना चापराजिता (१) गान्धारी हस्तिजिह्वा च पूषा चैव तथाऽपरा। अलम्बुसा कुहूश्चैव शङ्खिनी दशमी स्मृता। तालुजिह्वेभजिह्वा च (२) विजया कामदाऽपरा। अमृता बहुला (३) नाम नाड्यो वायुसमीरिताः॥"—इत्युक्ताः। तासां यत् चक्रं मणिपूराख्यं (हृदयस्थितं) तन्मध्ये स्थित आत्मा स्वरूपं यस्य तादृशः हृदि हृदये विशिष्टं निहितं रूपं ज्योतिरादिरूप आकारो यस्य तथाभूतः। तद्विदां तथाज्ञानवतां सिद्धयोऽणिमादयस्ता ददातीति सिद्धिदः। सिद्धयश्चाष्टौ, तदुक्तम् "अणिमा महिमा चैव गरिमा लघिमा तथा। प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः॥"—

---

१ "सुषुम्ना चापरा स्मृता" इति पाठे "पूषा च सुयशास्तथा"—इत्यग्रे पाठः॥ २ "लोलजिह्वेभजिह्वा च"—इति पाठान्तरम्। "तालुजिह्वा च जिह्वा च"—इत्यपि पाठान्तरम्॥ ३ "अमृता चक्रनामा च एता वायुसमीरिताः"—इति पाठान्तरम्॥

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः, यथा,

फुल्लुक्करं कलमकूरणिहं वहन्ति
जे सिन्धुवारविडवा मह वल्लहा दे ।
जे गालिदस्स महिसीदहिणो सरिच्छा
दे किं च मुद्धविअइल्लपमूणपुञ्जा ।

---

इति । तथा, अविचलितं निश्चलं मनश्चित्तं येषां तादृशैः साधकैः उपासकैः मृग्यमाण अन्विष्यमाणः । तथा, शक्तिभिः ज्ञानेच्छाकृतिभिः परिणद्धो व्याप्तः उपहितो वा । शक्तिः पार्वती तस्याः नाथः पतिरित्यर्थः । केचित्तु, शक्तिभिः ब्राह्मी– माहेश्वरी– कौमारी– वैष्णवी– वाराही– माहेन्द्री– चामुण्डाख्याभिरष्टाभिः परिणद्धः वेष्टितो नित्ययुक्तो वा, भैरवमूर्तित्वादितिः भावः । अत एव तासामेव शक्तीनां नाथ इत्याहुः । मालिनी छन्दः । लक्षणमुक्तं प्राक् ( ९८ पृष्ठे )

अत्र नाडी–सिद्ध्यादिपदानामागममात्रप्रसिद्धत्वेनाप्रतीतत्वेऽपि वक्तृचा. कपालकुण्डलिकायाः स्वयं परामर्शात्प्राग्वद्गुणत्वम् । अत एवाहुः कमलाकरभट्टा अपि. "शक्तयोऽस्य जगत्सर्वं शक्तिमांश्च महेश्वरः "– इत्यागममात्रप्रसिद्धत्वेऽपि स्वयं ज्ञातत्वाद्गुणत्वमिति ॥

नीचपात्रोक्तिषु ग्राम्यस्य गुणत्वमुदाहरति अधमेत्यादि । अधमप्रकृतीनां चेट-विट-विदूषकाणां हास्यरसप्रधानानामुक्तिषु हास्यकरीषु तथैवौचित्याद्दोषत्वाभावे हास्यपर्यवसायित्वाद्ग्राम्यो गुण इत्यर्थः । फुल्लुक्करमिति । "पुष्पोत्करं कलमभक्तनिभं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते । ये गालितस्य महिषीदध्नः सदृक्षास्ते किं च मुग्धविचकिलप्रसूनपुञ्जाः ॥ "— इति संस्कृतम् । कर्पूरमञ्जरीनामकसट्टके ( १ ) प्रथमजवनिकान्तरे विदूषकोक्तिरियम् । यत्तु " विद्धशालभञ्जिकायां विदूषकोक्तिरियमिति चन्द्रिकोद्द्योतयोरुक्तम् "– तत्तु तत्तदनवलोकनमूलकमेव । कूरशब्दो भक्ते देशी । तदुक्तमुद्द्योते " प्राकृते देशीयमेतत् "– इति । कलमाः शालिधान्यानि तेषां भक्तम् ओदनं तन्निभं तत्तुल्य पुष्पोत्कर कुसुमपुञ्जं ये वहन्ति ते सिन्धुवारस्य निर्गुण्डीवृक्षस्य विटपाः शाखाः मम वल्लभा. प्रियाः । शाल्योदनसादृश्यं प्रियत्वे बीजम् । तथा. ये गालितस्य निर्जलीकृतस्य महिषीदध्नः सदृक्षाः सदृशा. किंचेति समुच्चये, तेऽपि मुग्धस्य सुन्दरस्य विचकिलप्रसूनस्य मल्लिकापुष्पस्य पुञ्जाः 'मम वल्लभा' – इत्यनुषङ्गः । सिन्दुवारेत्यपि पाठान्तरम् । " सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि "– इत्यमरः । " पुमान् विचकिलो मल्लीभेदे दमनकेऽपि च "– इति विश्वः । वसन्ततिलका छन्दः । लक्षणमुक्तं प्राक् ( ६४ पृष्ठे )

---

१ सट्टकलक्षणं तूक्तं प्राक् ( पृष्ठे ४५७ ) ॥

अत्र, कलमभक्तमहिपीदधिशब्दा ग्राम्या अपि विदूपकोक्तौ ॥

न्यूनपदं क्वचिद्गुणः, यथा,

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद ! माऽति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥

---

अत्रेति । कलमेत्यादि प्राकृतविवरणमिति विस्तारिकासारबोधिनीसुधासागरादिषु स्पष्टम् । तथा चात्र कूरमहिसीदहिशब्दानां ग्राम्यत्वेऽपि विदूपकोक्तौ हास्यपरिपोपकत्वाद्गुणत्वमिति भावः । "स पुनर्वेपभाषाभिर्हास्यकारी विदूषकः"— इति विदूषकलक्षणं वोध्यम् ॥

वाक्यदोषेषु प्रतिकूलवर्णोपहतलुप्तविसर्गविसंधिहतवृत्तानां नित्यदोषत्वात्तान् अपहाय न्यूनपदानित्यत्वं दर्शयति न्यूनपदमिति। न्यूनपदमपि क्वचिद्गुणो यत्र न्यूनतयैवाभिमतविशेषसिद्धिरित्यर्थः । गाढेति । अमरुशतके शृङ्गाररसातिरेकसीमानं प्राप्तस्य कस्यचिन्नायकस्य सुरतान्ते रतिश्रमनिमग्नां प्रेयसीमनेकधोल्लिख्य वितर्कोऽयम् । गाढालिङ्गनेन दृढपरिरम्भणेन वामनीकृतौ खर्वीकृतौ, यद्वा, कठोरत्वात्कथंचिन्नामितौ कुचौ यस्याः, (अनेन पीनोच्चकुचत्वं सूचितम्) "खर्वो ह्रस्वश्च वामनः"— इत्यमरः । सा चासौ अत एव प्रोद्भूताः प्रकटाः रोमोद्गमाः रोमाञ्चा यस्याः सा। तथा, सान्द्रो (प्रियसंवन्धेन) निविडो यः स्नेहरस आनन्दस्तस्यातिरेक आधिक्यं तेन विगलत् विस्रंसत् श्रीमन्नितम्बात् सुन्दरतमकटिपश्चाद्भागात् अम्बरं वस्त्रं यस्यास्तादृशी । हे मानद मानं द्यति खण्डयति मानं ददातीति च मानदेति व्युत्पत्त्या हे मानखण्डक हे सन्मानदायक च मा मां-मा "आयासय"— इति शेपः । माम् अति अत्यन्तं मा "पीडय"— इति शेपः । अलं पूर्यतामिति क्षामाणि कृशानि (न्यूनानि) अस्पष्टानि वा अक्षराणि यस्मिन् कर्मणि यथा स्यात्तथा उल्लापिनी वदन्ती । एवंभूता प्रेयसी सुप्ता कि नु, निश्चलत्वेन वर्तमानत्वादिति भावः । सुप्तेत्यादयो नायकवितर्काः । सुप्तस्यापि लोके श्वासाद्यनुभवादाह मृतानु किमिति । किं नु मृतेत्यन्वयः । मृताऽपि वहिरनुभूयते इत्यत आह मनसीति । मे मनसि लीना जतुकाष्ठन्यायेनैक्यं गता "किं नु"— इत्यनुषङ्गः । ननु तादृशोऽपि पदार्थः पृथक्कर्तुं शक्यते इत्यत आह विलीनेति । किं नु विलीना नीरक्षीरन्यायेन मिश्रीभावं गतेत्यर्थः । नुशब्दः सर्वत्र वितर्के । शार्दूलविक्रीडितं छन्दः । लक्षणमुक्तं प्राक् (९ पृष्ठे) ।

क्वचिन्न गुणो न दोषः, यथा,

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति,
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं,
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥

अत्र पिहितेत्यतोऽनन्तरं नैतद्यत इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः, उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते इति न दोषः ॥

---

अत्र, मामेत्यत्र "आयासय"– इति, माऽतीत्यत्र "पीडय"– इति न न्यूनम् । न च दोषः, झटित्यध्याहारेण प्रतीतेः स्फुटत्वात् । प्रत्युत गुणः, हर्षसम्मोहातिशयप्रत्यायकत्वेन रसातिरेकव्यञ्जकत्वात् । एवं शोकादावपि गुणत्वं बोध्यमिति प्रदीपोद्द्योतयोः स्पष्टम् ॥

क्वचिदिति । न्यूनपदमित्यनुषङ्गः । तिष्ठेदिति । विक्रमोर्वशीये चतुर्थाङ्के विरहिणः पुरूरवस उक्तिरियम् । सा उर्वशी कोपवशात् प्रभावेनान्तर्धानकरणविद्यया दैवशक्त्या वा पिहिता सती (अत्रैव) तिष्ठेत्– इति वितर्कः । एतदुत्तरं "नैतद्युक्तम्, यतः"– इति पूरणीयम् । यतो यस्मात्कारणात् सा उर्वशी दीर्घं चिरकालं न कुप्यति । स्वर्गायेति कर्मणि चतुर्थी (१), "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" (२।३।१४) – इति पाणिनिसूत्रात् । यत्तु "तुमर्थाच्च भाववचनात्" (२।३।१५)– इति सूत्रेण चतुर्थीति कमलाकरचन्द्रिकाकारादिभिरुक्तम्, तत्तु अविचारविजृम्भितमेव । स्वर्गाय स्वर्गं गन्तुम् उत्पतिता ऊर्ध्वगमनानुकूलक्रियावती भवेत् । अस्याः उर्वश्याः मनः पुनः मयि मद्विषये भावेन स्नेहेन आर्द्रं सरसम् । मे मम पुरोवर्तिनीं च तां प्रियाम् (उर्वशीं) हर्तुम् अपहर्तुं विबुधानां देवानां द्विषः शत्रवः असुरा अपि न शक्ताः, किमुतान्ये । सा चात्यन्तं नयनयोः अगोचरम् (२) अगोचरत्वम् (अविषयत्वं) याता प्राप्तेति कोऽयं विधिः प्रकारो दैवं वा 'वर्तते'– इति शेषः । शार्दूलविक्रीडितं छन्दः । लक्षणमुक्तं प्राक् (९ पृष्ठे) ।

अत्र पिहितेत्यनन्तरं "नैतद्युज्यते, यतः"– इत्येतैः पदैर्न्यूनम्, एवं द्वितीयादेऽपि । न चात्र गुणत्वम्, विशेषबुद्धेरनुत्पादनात् । नापि दोषत्वम्, तदभावेऽपि 'दीर्घं न सा कुप्यति'– इत्यादिप्रतीत्या 'तिष्ठेत्कोपवशात्'– इत्यादिप्रतीतीनां बाध्यत्वावगमादिति प्रदीपे स्पष्टम्। बाध्यत्वावगमादिति । [illegible]

---

१ फलेभ्यो यातीतिवत् । फलान्याहर्तुं यातीति यावत् ॥ २ अगोचरमिति [illegible] निर्देशः ॥

अधिकपदं क्वचिद्गुणः, यथा,

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति।
तत्साधवो न, न विदन्ति, विदन्ति किंतु,
कर्तुं वृथा प्रणयमस्य न पारयन्ति॥

अत्र, विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम्।

यथा वा,

वद वद जितः स शत्रुः, न हतो जल्पंश्च तव तवास्मीति।
चित्रं चित्रमरोदीद्धा हेति परं मृते पुत्रे॥

---

च्चेत्यपि बोध्यमित्युद्द्योतः। तदेवाह अत्रेसादि। न्यूनैः अनुपात्तैः। विशेषबुद्धेरिति। वितर्करूपभावस्य न्यूनपदेनाप्रकर्षादिति भावः। न गुण इति। न्यूनपदत्वं न गुण इत्यर्थः। दोषोऽपि न भवतीत्याह उत्तरेति। दीर्घं न सा कुप्यतीत्यादिरूपेत्यर्थः। प्रतिपत्तिः ज्ञानम्। पूर्वां तिष्ठेत्कोपवशादित्यादिरूपाम्। बाधते इति न दोष इति। दीर्घमित्याद्युत्तरवाक्यार्थावगमेनैव पूर्ववाक्यार्थस्य बाध्यत्वावगमान्न्यूनपदत्वं न दोष इति भावः। उक्तं च विवरणेऽपि, अयं भावः, नैतदित्यादेरनुपादानेऽपि निषेधहेतुभूतस्य 'दीर्घं न सा कुप्यति'— इत्यादेरुक्त्यैव निषेधो वाच्यवत् प्रतीयते, अतस्तदनुपादानं न दोषायेति॥

अधिकपदस्य गुणत्वमाह अधिकेति। क्वचिद्गुण इति। यत्र विशेषप्रतिपत्तिरिति शेषः। यद्वञ्चनेति। वञ्चनायां प्रतारणायाम् आहिता स्थापिता कृता वा मतिर्बुद्धिर्येन सः, कार्ये उन्मुखस्तत्परः, खलजनः दुर्जनः बहु अनल्पं चाटुगर्भं प्रियवाक्यगर्भं कृतकं मिथ्याभूतं यत् वचनं ब्रवीति, तत् साधवः पण्डिताः न विदन्ति न जानन्ति —इति न, किन्तु विदन्ति। कथं तर्हि ज्ञात्वाऽप्युपकुर्वन्तीत्यत्राह कर्तुमित्यादि। तथापि अस्य खलस्य प्रणयं कृतकमपि स्नेहं वृथा कर्तुं न पारयन्ति न शक्नुवन्तीत्यर्थः। वसन्ततिलका छन्दः। लक्षणमुक्तं प्राक् (६४ पृष्ठे)।

दोषत्वाभावमुपपादयति अत्र विदन्तीतीति। अन्ययोगव्यवच्छेदपरं साधव एव विदन्ति नान्ये इत्यर्थपरम्। अत्र द्वितीयं विदन्तीति पदमन्ययोगव्यवच्छेदं प्रतिपादयन्नाधिकपदत्वेऽपि दुष्टमित्यर्थः। नञ्द्वययोगेन ज्ञानातिशये लब्धे पुनर्विदन्तीति पदमेते एव जानन्तीति न त्वन्यं ज्ञापयन्तीति विशेषकत्वाद्गुण इति भाव इति प्रदीपोद्द्योतयोः स्पष्टम्॥

एवं हर्षभयादियुक्ते वक्तरि अधिकपदस्य गुणत्वमित्युदाहरति यथा वेसादि। वदवदेति। सः शत्रुः जितः? वदवदेति रणादागतं प्रति स्वामिनः प्रश्नः। तवास्मि त-

—इत्येवमादौ हर्षभयादियुक्ते वक्तरि ॥
कथितपदं क्वचिद्गुणः, (लाटानुप्रासे, अर्थान्तरसंक्रमितवाच्ये, विहितस्यानुवाद्यत्वे च), क्रमेणोदाहरणम्,

सितकरकररुचिरविभा
विभाकराकार! धरणिधर! कीर्तिः ।
पौरुषकमला, कमला
साऽपि तवैवास्ति नान्यस्य ॥

---

वास्मि— इति जल्पन् न हतः । पर किंतु पुत्रे मृते सति चित्रं विचित्रं यथा स्यात्तथा हा-हेति अरोदीदित्युत्तरम् । आर्या छन्दः । लक्षणमुक्तं प्राक् (२ पृष्टे) ।

अत्र पादचतुष्टये क्रमेण हर्ष–भय–विस्मय–विषादयुक्ता वक्तार, हर्षादियुक्ते व-क्तरि अधिकपदस्य गुणत्वम्, त्वरादिव्यक्तया हर्षाद्यभिव्यञ्जकत्वात् । तदेवाह इत्येव-मादाविति । वक्तरीति । अधिकपदत्वं गुण इति शेष. । तदुक्तम्, “विषादे विस्मये हर्षे दैन्ये कोपेऽवधारणे । प्रसादनेऽनुकम्पायां द्विस्त्रिरुक्तं न दुष्यति ॥”— इति बाल-बोधिन्यादौ स्पष्टम् । प्रदीपे तु “विस्मये च विषादे च दैन्ये चैवावधारणे । तथा प्रसा-दने हर्षे वाक्यमेकं द्विरुच्यते ॥”— इति पाठान्तरम् । एव पुनरुक्तेऽपि द्रष्टव्यम् ॥

कथितपदस्यापि त्रिषु गुणत्वमाह कथितपदमित्यादि । कथितपदस्यापि “शाब्दस्तु लाटानुप्रासः”— इति वक्ष्यमाणे लाटानुप्रासे तन्निर्वाहकतया, उक्ते (८० पृष्टे) अर्था-न्तरसंक्रमितवाच्ये ध्वनौ विशेषव्यञ्जकतया, पूर्ववाक्ये विधेयस्योत्तरवाक्ये यत्रानुवाद-स्तत्र च तादृशाभिमतनिर्वाहकतया गुणत्वमिति भावः । तत्र लाटानुप्रासे कथितपदस्य गुणत्वमुदाहरति सितकरेति । हे विभाकराकार विभाकरः सूर्यस्तत्सदृश, हे धरणि-धर राजन् सितकरः श्वेतकिरण. (चन्द्र) तस्य करवत् किरणवत् रुचिरा आह्लादिका विभा कान्तिर्यस्यास्तादृशी कीर्तिः, तथा, पौरुषकमला पराक्रमलक्ष्मीः, सा कमला प्रसिद्धा लक्ष्मीश्च तवैवास्ति, नान्यस्येत्यर्थ । पौरुषमेव कमलमधिष्ठानं यस्याः सा लक्ष्मीरित्यर्थ इति केचित्, तन्न, तथा सत्यर्थभेदेन ‘कमला कमला’— इत्यस्य लाटानुप्रासाभा-वापत्त्या लाटानुप्रासे कथितपदगुणत्वोदाहरणासंगतेः, अन्वयमात्रभेदे एव तस्य (लाटा-नुप्रासस्य) नवमोल्लासे वक्ष्यमाणत्वादित्युद्द्योतचन्द्रिकयोः स्पष्टम् । आर्या छन्दः । लक्षणमुक्त प्राक् (२ पृष्टे) ।

अत्र ‘कमला कमला’— इति लाटानुप्रास, तन्निर्वाहकत्वात्कथितपदस्य गुणत्व-मिति बोध्यम् । उद्द्योतकारास्तु, अत्रानुप्रासमात्रं निमित्तम्, शोभायाः सादृश्येनापि निर्वाहादित्याहुः ॥

तालो जाअंति गुणा:,
जाला दे.सहिअएहिँ घेप्पन्ति ।
रइकिरणाणुग्गहिआइँ
होन्ति कमलाइँ कमलाइँ ॥
जितेन्द्रियत्वं विनयस्य कारणं,
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते,
जनानुरागप्रभवा हि संपदः ॥

---

अर्थान्तरसंक्रमितवाच्ये ध्वनौ कथितपदस्य गुणत्वमुदाहरति तालेति । " तदा जायन्ते गुणाः, यदा ते सहृदयैर्गृह्यन्ते । रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ "– इति संस्कृतम् । आनन्दवर्धनकृतपञ्चबाणलीलायां गाथेयमिति जयन्तकृतदीपिकायां सोमेश्वरकृतसंकेते च स्पष्टम् । द्वितीयकमलपदं विकाश–सौरभ–सौन्दर्यादिमत्कमलपरम् । जघनविपुला छन्दः । लक्षणमुक्तं प्राक् ( १४४ पृष्टे ) ।

अत्र द्वितीयकमलपदस्यार्थान्तरसंक्रमितवाच्यत्वेन व्यञ्जनोपयुक्तत्वाद्गुणत्वम् । असाधारणत्वादिकमत्र व्यङ्ग्यमिति बोध्यम् । व्याख्यातं चेदमन्यत्रापि, अत्र द्वितीयकमलपदं सौरभादिमदर्थकतयाऽर्थान्तरसंक्रमितवाच्यम्, तथात्वे च कथितपदत्वमेव प्रयोजकमिति प्रदीपः । तथात्वे चेति । पुनस्तत्पदोपादाने चार्थान्तरसंक्रमितवाच्यत्वं स्फुटमिति तन्निमित्तम्, अर्थान्तरसंक्रमितवाच्यलक्षणासाध्याविच्छित्तेः 'कमलान्युत्कृष्टानि'– इति रूप्यप्रयोगादप्रतीतेश्चेति भाव इत्युद्द्योतः । ननु तटघोषान्वयपरे 'गङ्गायां गङ्गा'– इत्यत्रात्यन्ततिरस्कृतवाच्येऽपि विशेषावगमसंभवे विशेषे प्रतिप्रसवोऽनुचित इति चेत्, न, घोषपदोपादानेऽपि विशेषप्रतिपत्तिसंभवेन पौनरुक्त्यस्याकिंचित्करत्वादिति चक्रवर्तिभट्टाचार्याः ।

विहितस्यानुवाद्यत्वे कथितपदस्य गुणत्वमुदाहरति जितेन्द्रियत्वमिति । जिता इन्द्रियाणि येन तस्य भावः जितेन्द्रियत्वं विनयस्य नम्रतायाः कारणं भवति । विनयात् गुणप्रकर्षो गुणोत्कर्षः अवाप्यते प्राप्यते । गुणप्रकर्षेण जनः अनुरज्यते अनुरक्तो भवति । हिशब्दः प्रसिद्धौ, संपदः जनानुरागप्रभवा भवन्तीत्यर्थः । " गुणाधिके पुंसि जनोऽनुरज्यते "– इति पाठे गुणैरधिके उत्कृष्टे इत्यर्थः । अत्र जितेन्द्रियत्वाद्विनयः, तस्माद्गुणप्रकर्षः, तस्माज्जनानुरागः, तस्मात्संपदः इति पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वात्कारणमालाऽलंकारः । अत्र पद्ये भग्नप्रक्रमत्वं दोषोऽस्त्येव, विनयस्य कारणमित्युपक्रम्य विनयादवाप्यते इत्युपसंहारादिति विभावनीयम् । वंशस्थं वृत्तम् । लक्षणमुक्तं प्राक् ( १९ पृष्टे ) ।

पतत्प्रकर्षमपि क्वचिद्गुणः, यथा, उदाहृते प्रागप्राप्तेत्यादौ ॥

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः, (यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम्, अपि तु वाक्यान्तरमेव क्रियते), यथा, अत्रैव प्रागप्राप्तेत्यादौ ॥

अपदस्थसमासं क्वचिद्गुणः, यथा, उदाहृते रक्ताशोकेत्यादौ ॥

---

अत्र पूर्ववाक्ये जितेन्द्रियत्वेन विनयो विहितः, स एव चोत्तरवाक्ये गुणप्रकर्षार्थं निमित्तत्वेनानूद्यते, एवमुत्तरत्रापीति विहितस्यानुवाद्यत्वम्; विहितस्यानुवाद्यत्वे हि कारणमालाऽलंकारनिर्वाहकतया कथितपदस्य गुणत्वम् । अयं भावः, कारणमालाऽलंकारे पूर्वोपात्तपदेनैव विनयादिकमुपादेयम्, पदान्तरेणोपादाने तु भिन्नत्वेनावभासप्रसङ्गः स्यात्, "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते"– इति भर्तृहरिप्रोक्तन्यायेनोपात्तस्य शब्दस्यापि विशेषणतया भानाङ्गीकारात् । भिन्नत्वेनावभासे चोत्तरोत्तरं प्रति पूर्वपूर्वस्य हेतुता न लभ्येतेति कारणमालाऽलंकारसंपादनमेव कथितपदस्य गुणत्वे निमित्तमिति । दोषत्वाभावश्च गुणत्वेन वैरस्यरूपबीजाभावादिति बोध्यम् । एवं च सर्वत्रानुप्रासप्रसङ्गेऽपि पृथङ्निर्देशो निमित्तभेदादिति बोध्यमिति प्रदीपोद्द्योतादौ स्पष्टम् ॥

उदाहृते इति । अत्रैवोल्लासे (३७० पृष्ठे)– इति बोध्यम् । प्रागप्राप्तेत्यादाविति । अत्र हि चतुर्थपादे गुरुस्मृत्या क्रोधाभावान्मसृणमेव (कोमलमेव) पदं युक्तमिति दोषत्वाभावः, गुणत्वं तु परशूत्कर्षस्य विनयप्रकाशकतयेति भावः ॥

समाप्तपुनरात्तस्यापि प्रतिप्रसवमाह समाप्तपुनरात्तमित्यादि । यत्र न विशेषणेत्यादि । प्रागप्राप्तेत्यादौ 'येनानेन'– इत्यादि न विशेषणदानमात्रार्थं किं तु वाक्यान्तरमेव विधेयम्, अतो बीजाभावान्न दोषः । न च गुणः, विशेषणदानाभावादिति प्रदीपे स्पष्टम् । अयमभिप्रायः, विशेषणस्य विशेष्यसाकाङ्क्षत्वाज्जनितान्वयबोधविशेष्यस्य पुनरावृत्तिकल्पनात्प्रतीतिविलम्बो निराकाङ्क्षत्वं च विशेषणोपादाने दूषकताबीजम्, तच्च "क्रेङ्कारः स्मरकार्मुकस्य" (३८८ पृष्ठे)–इत्यादौ स्पष्टमेव, प्रागप्राप्तेत्यादौ तु "येनानेन"–इत्यादिवाक्यान्तरारम्भसत्त्वेन न तादृशदूषकताबीजम्, पूर्वोत्तरवाक्ययोः सर्वनाम्ना यच्छब्देनाकाङ्क्षोत्थापनात् । किंच प्रागप्राप्तेत्यादौ प्रत्युत गुणत्वमेव, यथाऽऽहुः, "स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥"–इति । अत एव "यो नवग्यो लान्याय वेगुन्न"–इति पद्ये तत्रापि (क्रेङ्कार इत्यत्रापि) अदोष एवेत्युक्तं प्रागितोक्तन्यायेनेति प्रदीपे स्पष्टम् ॥

अर्थान्तरैकवाचकादीनां नित्यदोषत्वेन तानपहायापदस्थसमासमाह अपदस्थेत्यादि । उदाहृते इति । अस्मिन्नेवोल्लासे (४६९ पृष्ठे)–इति बोध्यम् । रक्ताशोकेत्या-

दाविति । 'अत्र हि शृङ्गारे दीर्घसमासस्यानौचित्यमिति अपदस्थसमासोऽपि उद्दीपकं प्रति कोपमुत्कर्षयन् विप्रलम्भमेव पुष्णातीति गुणः'—इति बोध्यम् । अत्र प्रदीपकाराः, अत्रापदस्थसमासत्वमेव कथमिति चिन्त्यम्, द्वितीयार्धस्यापि तत्स्थानत्वात्, तस्यापि रुष्टवक्तृकत्वात्, अन्यथा (१) गुणत्वासंभवादित्याहुः । तत्रेयं चिन्ता, द्वितीयपादवदुत्तरार्धस्यापि समासस्थानत्वं रुष्टवक्तृकत्वं चेति सत्यम्, अतएव पूर्वं शृङ्गारप्रतिकूलस्यापि दीर्घसमासस्य रुष्टवक्तृकत्वेन गुणत्वमुदाहृतम्; प्रकृते तु तारतम्यविचारे नोद्धष्टेति क्रोधोत्पत्त्यव्यवहितोच्चारितपदेष्वेव तादृशसमासस्यावश्यकता नतु कतिचित्पदानि परित्यज्येत्यपदस्थसमासत्वम्, न पुनरस्य रुष्टवक्तृकत्वेन गुणत्वमुदाह्रियते, किं तून्मत्तपुरूरवस उक्तिरियम्, अतः स्थानौचित्याविवेकादुन्मादपरिपुष्टच्चैवेति वाग्देवतावतारोक्तिः (मम्मटोक्तिः) अनवद्यैवेत्यसकृदस्माभिरावेदितं शिष्टैर्मन्तव्यम् । उक्तानि चोन्मत्तचरितानि, "अस्थानहासस्मितनृत्यगीतक्रोधाङ्गविक्षेपणरोदनानि"—इति । एवं च यद्भास्करभट्टाचार्यैरुक्तम् 'शृङ्गारे दीर्घसमासस्यानौचित्यादस्थानत्वम्'—इति, तद्गर्भस्रावेणैव गतमिति ध्येयमिति सुधासागरकाराः ॥

केचित्तु, अभवन्मतयोगस्यापि क्वचिददुष्टता, यथा, 'हिरण्यपूर्वं कशिपुं प्रचक्षते'—इत्यत्र । तथा हि, कशिपुपदस्य स्वार्थपरत्वे पुंस्त्वान्वयो न स्यात्, "कशिपु त्वन्नमाच्छादनं द्वयम्"—इत्यमरेण नपुंसकानुशासनात् । शब्दपरत्वे तु प्रख्यानक्रियान्वयानुपपत्तिः, संज्ञिन एव संज्ञया व्यवह्रियमाणत्वात् । अदोषत्वं तु लक्षणया झटित्येव धर्मिप्रत्यायनात् । न च प्रयोजनाभावः, शब्दप्रसरस्यैव तत्त्वात् । एवं "दशपूर्वं रथम्"—इत्यादिष्वपीत्याहुः । तन्न, लक्षणया विवक्षितान्वयोपपत्तावभवन्मतयोगताविरहात्, लक्षणातः पूर्वमन्वयानुपपत्तेर्लक्षणोत्थापकत्वेनादोषत्वात्, अन्यथा सर्वत्रैव लाक्षणिके तत्प्रसङ्गात् । किंच लक्षणैव न स्यात्, विकल्पासहत्वात् । तथाहि, असुरविशेषत्वेन लक्षणा, हिरण्यपूर्वादिशब्दवाच्यत्वेन वा; नाद्यः, प्रख्यानक्रियाया द्विकर्मकत्वेन कर्मान्तराकाङ्क्षाया अनुवृत्तेः । नान्त्यः, हिरण्यपूर्वककशिपुत्वेन ख्यातिविरहात्, हिरण्यकशिपुत्वेनैव प्रसिद्धेः । द्विरेफादिपदे तु निरूढलक्षणया जातिविशेषपुरस्कारेणैव प्रतीतिरिति न तत्र दोषः । तेनाभवन्मतयोगस्य नित्यदोषतैवेति चक्रवर्तिकृतविस्तारिकायां स्पष्टम् । वस्तुतस्तु 'हिरण्यपूर्वम्'—इत्यादौ नायं दोषः, नामनामिनोरभेदस्य सत्त्वेनेष्टयोगसंपत्तेरिति प्राक् (४०१ पृष्ठे) व्याख्यातत्वात् ॥ किंच 'अमरेण नपुंसकानुशासनात्'—इत्यप्यनु-

---

१ अन्यथा गुणत्वेति । क्रोधोन्मादपरिपुष्ट्या हि तस्य गुणत्वम्, विरहिणः पुरूरवस इयमुक्तिरिति भावः । नो दृष्टेत्यस्यापि कोपप्रकाशकत्वेन तत्स्थानत्वम्, एवच स्थानेऽकृतत्वमात्रेणापदस्थपदतेति कश्चिदित्युद्द्योतः ॥

गर्भितं तथैव, यथा,

हुमि अवहत्थिअरेहो
णिरंकुसो अह विवेअरहिओवि ।
सिविणेवि तुमम्मि पुणो
पत्तिहि भत्तिं ण पसुमरामि ॥

अत्र, प्रतीहीति मध्ये, दृढप्रत्ययोत्पादनाय ॥

---

पपन्नम्, उत्तरार्धस्थस्य ‘अस्त्रियाम्’–इत्यस्य काशिपावपि अन्वय इत्यभ[illegible](¹) स्पष्टमुक्तत्वादिति दिक् ॥

गर्भितं तथैवेति । गर्भितमपि क्वचिद्गुणो दृढप्रत्ययहेतुत्वातः न च दोषः, प्रतीत्य[illegible]-वधानादित्यर्थः। यथेत्युदाहरति हुमीति । आनन्दवर्धनकृतविषमबाणलीलायां [illegible] प्रति यौवनोक्तिरियमिति माणिक्यचन्द्रसोमेश्वरकृतयोः संकेतयो जयन्तकृतदीपिकायां च स्प-ष्टम्, एवमेव सरस्वतीतीर्थ्यामपि । एतेन ‘गुरुं प्रति शिष्योक्तिरियम्’–इति [illegible] कपोलकल्पितमपास्तम् । “भवाम्यपहास्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि । स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि ॥”– इति संस्कृतम् । हे स्वामिन् अहम् अप-हस्तिता त्यक्ता रेखा मर्यादा येन सः, निरङ्कुशः अनुरोधशून्यः, उच्छृङ्खलो वा, अथ विवेकरहितः धर्माधर्मशून्योऽपि भवामि । (विशेषणत्रयस्य भिन्नार्थत्वं [illegible]) । स्व-प्नेऽपि त्वयि पुनः ‘प्रतीहि त्वं सत्यं जानीहि’ भक्तिं न प्रस्मरामि न [illegible]-र्थः । “वर्तमानसामीप्ये वर्तमानवद्वा” (३ । ३ । १३१)– इति सूत्रेण [illegible] लट् । “ण पुल्हसिम्मि”– इति पाठे न प्रमोक्ष्यामीत्यर्थः । यादृशस्तादृशोऽपि स्वामिन्[illegible]-ऽनुग्राह्य एवेति भावः । भत्तिमित्यत्र तत्तिमिति पाठे तान्ति [illegible] । हुमि [illegible] ‘होमि’–इति पाठे भवामीति ‘भम्मि’–इति पाठे भ्रमामीति च [illegible]-दन्ति, तच्चिन्त्यम्, छन्दोभङ्गापत्तेः । गाथा छन्दः । लक्षणमुक्त प्राक् (२ पृष्ठे) ।

अत्र प्रतीहीति वाक्यगर्भितत्वं दृढप्रत्ययार्थतया गुणः । तदेवाह अत्र प्रतीहीतीति । दृढप्रत्ययोत्पादनायेति । प्रतीहीति सत्यप्रतीतिपरम्. तेन [illegible] प्रतीहीत्यनेन शपथसमानशीलेन सौहार्दविषयताख्यापनम्.. तत्र [illegible]-त्वेन प्रतीतौ तदकिञ्चित्करं स्यादिति भावः । प्रतीहीत्यत्र [illegible]

---

१ “[illegible]” ॥ १३० ॥–इति [illegible] [illegible] एवं द्वयं [illegible]

एवमन्यदपि लक्ष्याल्लक्ष्यम् ॥

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥ ६० ॥
प्रतिकूलविभावादिग्रहो, दीप्तिः पुनः पुनः।
अकाण्डे प्रथनच्छेदौ, अङ्गस्याप्यतिविस्तृतिः ॥ ६१ ॥
अङ्गिनोऽननुसंधानं, प्रकृतीनां विपर्ययः।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥ ६२ ॥

---

त्वमक्षतम्। एवं चास्य दोषत्वमुपपन्नमिति मन्तव्यम्। "परापकारनिरतैः" (४११ पृष्ठे)–इत्यत्र तु प्रसिद्धार्थस्योपदेशान्नास्त्युपपत्त्यपेक्षेति तत्र निराकाङ्क्षतैवेति बोध्यम्। एवम् "धन्यासि" (१४८ पृष्ठे)–इत्यादावपि 'सख्यः शपामि'– इति गर्भितं गुण एव, अविदग्धगोष्ठ्यां शपथेनैव प्रत्यायनौचित्यादिति सारबोधिन्यादौ स्पष्टम् ॥

एवमन्यदपि लक्ष्यं दृष्ट्वा ऊहनीयमित्याह एवमन्यदपीति। अन्यत् अदोषत्वादि, लक्ष्यात् उदाहरणात्, लक्ष्यं निरूपणीयमित्यर्थः। "पंथिअ! ण एत्थ सत्थरमत्थि" (१४४ पृष्ठे)–इत्यादौ स्रस्तरव्याजेन स्रस्तरं संभोगं वा श्लिष्टशब्देन याचते इति पथिकाभिप्रायसंदेहान्नायिकया तथैवोत्तरितमिति संदेहस्य विवक्षायां संदिग्धस्यादोषत्वमित्यायूह्यम्। यत्तु चण्डीदासप्रभृतिभिरुक्तम् "ताणं गुणग्गहणाणम्" (१९८ पृष्ठे)–इत्यादौ वचनप्रक्रमभेदस्यादोषता, प्रत्युत प्रेम्ण एकरूपत्वव्यञ्जनाद्गुणत्वमिति, तन्नरमणीयम्, एकवचनेनैव प्रेमैकरूपत्वव्यञ्जनात्प्रक्रमभङ्गस्याकिंचित्करत्वात्। अन्यथा द्विवचनोपादानेऽपि तत्प्रसङ्गादिति ध्येयमिति सुधासागरादौ स्पष्टम्। अमवन्मतयोगानभिहितवाच्यापदस्थपदसंकीर्णप्रसिद्धिहताक्रमामतपरार्थास्तु नित्या एवेति बोध्यमित्युद्द्योते स्पष्टम् ॥

अथ साक्षाद्रसविरोधिनो दोषानाह व्यभिचारीति। व्यभिचारिणां "निर्वेदग्लानि"–इत्यादिना (११७ पृष्ठे) प्रोक्तानां व्यभिचारिभावानाम्, रसानां "शृङ्गारहास्यकरुण"–इत्यादिना (१०० पृष्ठे) प्रोक्तानां शृङ्गारादीनां च, स्थायिभावानां "रतिर्हासश्च"–इत्यादिना (११६ पृष्ठे) प्रोक्तानां रत्यादीनां च शब्दवाच्यता (सामान्यतो विशेषतो वा) स्वशब्देनोपादानं दोष इत्यन्वयः। व्यभिचारिणां व्यभिचारिशब्देन निर्वेदादिशब्देन वा, रसानां रसशब्देन शृङ्गारादिशब्देन वा, स्थायिभावानां स्थायिभावशब्देन रत्यादिशब्देन वोपादाने त्रयो दोषा इत्यर्थः। व्यभिचारिणां स्वशब्दानुपादाने सत्येव स्वैः स्वैरनुभावैरभिव्यक्तौ भावध्वनित्वं रसाय पर्याप्तत्वं च, अतएवोक्तं (१२४पृष्ठे) "व्यभिचारी तथाञ्जितः"

स्वशब्दोपादानं व्यभिचारिणो यथा,

सव्रीडा दयितानने, सकरुणा मातङ्गचर्माम्बरे,
सत्रासा भुजगे, सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ, दीना कपालोदरे,
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

अत्र व्रीडादीनाम् । ("व्यानम्रा दयितानने, मुकुलिता मातङ्गचर्माम्बरे,

---

—इति, तथा रसपदेन शृङ्गारादिपदेन वा रसोपादानेऽपि विभावादिभिरभिव्यक्तिं विना न चर्वणीयता, अतएवोक्तं (९४ पृष्ठे) "व्यञ्जितश्चर्वणीयः" —इति, तथा स्थायिनोऽभिव्यक्ता एव रसतां प्राप्नुवन्ति न स्वपदोपात्ताः, तदुक्तं (८९ पृष्ठे) "व्यक्तः स तैः" —इत्यादि, एतत्सर्वं व्यञ्जनावृत्तेर्माहात्म्यम्, प्रमाणं तु सहृदयहृदयमेवेति ध्येयम्, एवं च स्वपदेनोपादाने तु तदुपादानकृत आस्वादापकर्ष इति दोष इति भाव इति सारबोधिन्यादौ स्पष्टम् । सिद्धान्ते रसस्य आस्वादात्मकस्य सामाजिकनिष्ठतया अवाच्यतया च रसशब्देनात्र आस्वाद्यमानोऽनुभावादिसंवलितः स्थायिभाव उच्यते, रसादिशब्दस्य तत्रैव शक्तेः, निर्विशेषस्थायिभावस्य स्वशब्दवाच्यतायां तृतीयो दोषः, रत्यादिपदानां केवलरत्यादावेव शक्तेरिति नाभेद इति विवरणे स्पष्टम् । अकाण्डेइति । अकाण्डेऽनवसरे प्रथनच्छेदौ विस्तारविच्छेदावित्यर्थः, रसस्यैवेति भावः । रसे इति । रस्यते आस्वाद्येत—इति व्युत्पत्त्या रसभावादिमात्रे आस्वाद्यमाने इत्यर्थः ॥

व्यभिचारिभावस्य स्वशब्दवाच्यत्व (दोषम्) उदाहरति सव्रीडेति । पार्वत्याः दृष्टिः वः युष्माकं शिवाय कल्याणायास्तु । दृष्टिं विशिनष्टि सव्रीडेत्यादि । दयितानने इत्यादीनि विषयसप्तम्यन्तानि । नायकस्य (शिवस्य) सम्मुखदर्शनाद्व्रीडा, एवं मातङ्गो गजस्तच्चर्माम्बरदर्शनेन कारुण्यम्, विभवाभावेन शोकोदयात् । भुजगदर्शनेन भयम् । आकाशस्थायी कथमत्रेति चन्द्रदर्शनाद्विस्मयः, विस्मयस्य स्थायित्वेऽपि चमत्कारकारित्वेनोपचाराद्रसत्वम् । पत्युरन्यस्त्रीसङ्गदर्शनादीर्ष्या । मणिस्थाने कपालदर्शनाद्दैन्यम् । नवसंगमे प्रणयिनी प्रीतियुक्ता चेत्यर्थः । शार्दूलविक्रीडितं छन्दः । लक्षणमुक्तं प्राक् (९ पृष्ठे) ।

अत्र व्रीडादीनां व्यभिचारिणां शब्दवाच्यत्वं दोषः । तदेवाह अत्र व्रीडादीनामिति । शब्दवाच्यतेति शेषः । अत्रेदं दूषणबीजम्,—सति संभवेऽनुभावादिनाऽभिव्यक्तावेव चमत्कारास्वादयोरुत्कर्षः, तत्र वाच्यत्वे तु अगूढत्वापत्तेस्तयोरपकर्ष इति । एवं च यत्र यस्यानुभावादिना स्फुटतरं नाभिव्यक्तिसंभवः, तत्र तस्य वाच्यत्वेऽपि न तयोरपकर्ष इति स्वपदोक्तिर्न दोषः । अत एव वक्ष्यति (५०१ पृष्ठे) "न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित्" — इति । एवमेषामास्वाद्यत्वे एव दोषो न त्वितराङ्गतयाऽनास्वाद्य-

**उपमानोपमेययोरेव, (न कार्यकारणादिकयोः) साधर्म्यं भवतीति तयोरेव समानेन धर्मेण संबन्ध उपमा ।**

---

साधारणो धर्मः, साधर्म्यं चेति चतुष्टयमपेक्ष्यते । साधारणधर्मवत्त्वेन प्रसिद्धः पदार्थः उपमानम्, तद्धर्मवत्तया वर्णनीयः पदार्थः उपमेयम्, केचित्तु, अधिकगुणवत्तया संभाव्यमानमुपमानम्, निकृष्टगुणवत्तया संभाव्यमानमुपमेयमित्याहुः, सादृश्यप्रतियोगि उपमानम्, सादृश्यानुयोगि उपमेयमित्यन्ये । उभयत्र ( उपमाने उपमेये च ) संगतो धर्मः साधारणो धर्मः, यस्य धर्मस्य संबन्धात् येन सह यदुपमीयते स साधारणो धर्मः, तत् उपमानम्, तच्चोपमेयमिति परमार्थः । यथा ' कमलमिव मुखं मनोज्ञम्'—इत्यादौ मनोज्ञत्वधर्मसंबन्धात् तद्वत्तया प्रसिद्धेन कमलेन सह मुखमुपमीयते इति मनोज्ञत्वं साधारणो धर्मः, कमलमुपमानम्, मुखमुपमेयमित्युपमाऽलंकारोऽयम् । अत्र सर्वत्र इवादिपदादेरिव यथादिपदादपि साम्याद्यवगतेः (पर्यायपरिवृत्तिसहत्वात्) उपमादेरर्थालंकारता बोध्येत्युक्तं प्राक् (५८३पृष्ठे) इति ।

ननु साधर्म्यं हि सादृश्यापरनामकः संबन्धविशेषः, संबन्धश्च एकप्रतियोगिकोऽपरानुयोगिक एव नियतः, ( यस्य यत्र यः संबन्धः, यथाक्रमं तौ तस्य संबन्धस्य प्रतियोग्यनुयोगिनौ; यथा, खण्डस्य कुण्डे संयोगः, दण्डस्य कलशे कार्यत्वं च संबन्ध इति तस्य तस्य संबन्धस्य यथाक्रमं तौ खण्डदण्डौ प्रतियोगिनौ, तावपि कुण्डकलशावनुयोगिनाविति ), एवं चात्र, साधर्म्यसंबन्धस्य कौ प्रतियोग्यनुयोगिनाविति । यदि यौ—कौचिदपि तौ कल्प्येते—इत्युच्यते, तदा कार्यकारणादिरूपौ तौ किमिति न कल्प्येते?—इत्याशङ्कां निराकरोति उपमानेति । इदमत्र निराकरणम्, सर्वे एव न सर्वेषां संबन्धानां प्रतियोग्यनुयोगिनः, किंतु कौचित् कस्यचित्—इति कार्यत्वादिसंबन्धस्य प्रतियोग्यनुयोगिनावपि कार्यकारणादिकौ न साधर्म्यसंबन्धस्य तथा संभवत इति न तावत्र कल्प्येते, किंतु योग्यतया उपमानोपमेये एव प्रतियोग्यनुयोगितया नियतमाक्षिप्येते इति तदनुपादानं ( १ ) न दोषायेतीति विवरणे स्पष्टम् । व्याख्यातमिदं प्रदीपोद्द्योतप्रभास्वपि, ननु साधर्म्यस्य प्रतियोग्यनुयोगिनिरूप्यतया तदनभिधाने न्यूनत्वं लक्षणवाक्यस्येति चेत्, न, आक्षेपादुपमानोपमेयरूपयोस्तयोः ( प्रतियोग्यनुयोगिनोः ) लाभात् । नच प्रतियोग्यनुयोगिमात्राक्षेपे कार्यकारणादिकयोरपि " कारणगुणानुसारी कार्ये गुणः " इति व्यवहारात् कथंचित्साधर्म्यसंभवात्तत्रातिप्रसङ्ग इति वाच्यम्, उपमानोपमेये विनाऽन्यस्य कार्यकारणादिमात्रस्य यत्साधर्म्यं तस्य कविप्रतिभाकल्पितांशाभावेनानलंकारत्वात् । अयं भावः, चमत्कारिसाधर्म्यस्योपमात्वात्तस्य च कार्यकारणादिमात्रयोरभावान्नातिप्रसङ्गः । यत्र तु

---

१ तदनुपादानमिति । तयोरुपमानोपमेययोरनुपादानमग्रहणमित्यर्थः ॥

भेदग्रहणमनन्वयव्यवच्छेदाय ॥

कार्यकारणयोरपि तादृशं साधर्म्यमस्ति, यथा, 'पितेव पुत्रः सगुणः स आसीत्'—इत्यादौ, तत्र तयोरुपमानोपमेयत्वमुपमालंकारश्रेष्ठ एवेति । एवंचात्र लक्षणवाक्ये उपमानोपमेययोराक्षेपः साधर्म्यप्रतिपत्तिमात्रफलको (१) न तु व्यावर्तक इति बोध्यम् । उक्तव्युत्पत्तिलभ्यं साधर्म्यपदार्थमाह **समानेन धर्मेणेति** । एकत्वबुद्धिविषयेणेत्यर्थः । अत एवाहुर्बहवः, एकवचनमत्राविवक्षितम्, अन्यथा यत्किंचिद्धर्मेण साजात्यस्य सर्वत्र सुलभत्वादतिप्रसङ्गः स्यादिति ।

नन्वाक्षेपादेवोपमानोपमेययोर्लाभाङ्गीकारे भेदग्रहणमनर्थकम्, एकधर्मवत्त्वमिति व्यवहारस्य भेदे एव संभवेन भेदस्याप्याक्षेपादेव लाभसंभवात्; नह्यभेदे सादृश्यात्मकं साधर्म्यमुच्यते, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव सादृश्यपदार्थत्वादित्यत आह **भेदग्रहणमिति** । **अनन्वयव्यवच्छेदायेति** । 'नितम्बिनी सैव नितम्बिनीव'—इत्यादौ वक्ष्यमाणेऽनन्वयालंकारे एकस्यैवोपमानत्वमुपमेयत्वं चेति पारमार्थिकभेदविरहात्तद्व्यावृत्तये इत्यर्थः । न च तत्राप्युपमैवेति वाच्यम्, तत्र साधर्म्यस्य चमत्कारित्वाभावात्; उपमानान्तरव्यवच्छेदस्यैव चमत्कारित्वात् । नच तत्र धर्मस्यैकत्वे सजातीयताविरहेण नोपमाप्रसङ्ग इति वाच्यम्, धर्मिभेदस्येव धर्मभेदस्यापि काल्पनिकत्वेन सजातीयताऽनपायात् । तस्मात्साधर्म्यशब्दस्यारोपितानारोपितसाधारणसमानधर्मसम्बन्धमात्रपरत्वेऽपि अनारोपितसाधर्म्यनिबन्धन एवोपमालंकार इति मन्तव्यम् । इदमत्र तत्त्वम्, उपमानोपमेययोर्भेदश्चतुर्धा, उपात्तोऽनुपात्त आरोपितस्तिरोहितश्चेति । तत्राद्ये वाच्योपमा, यथा 'कमलमिव मुखं मनोज्ञमेतत्' (५८४ पृष्ठे)—इत्यादौ, द्वितीये व्यङ्ग्योपमा, यथा 'उल्लासस्य कालकरवाल०' (१३८ पृष्ठे)—इत्यादौ, तृतीयेऽनन्वयालंकारः, चतुर्थे रूपकालंकारः—इति सुधासागरे स्पष्टम् । इयं चोपमा यथेवसदृशतुल्यादिशब्दोपादाने वाच्या, मुद्गप्रतिपक्षादिशब्दोपादाने लक्ष्येत्युद्द्योते स्पष्टम् । अत्र सर्वेष्वलंकारलक्षणेषु अलंकारत्वे (२) सतीति विशेषणं विवक्षितम्, तर्हि ग्रन्थकृता किमिति नोपात्तमिति चेत्, तत्र तत्र तदुपादाने महद्गौरवं स्यादिति । अलंकारत्वे सति—इति विशेषणसत्त्वादेव 'गौरिव गवयः' 'घट इव पटो द्रव्यम्' 'घट इव पटो जातिमान्'. 'अब्धिवद्दधिवत्कीर्ति'—इत्यादौ सत्यपि साधर्म्ये नोपमालंकारः, वैचित्र्याभावात् । एवं रूपकादिस्थलेऽपि नोपमालंकारप्रसङ्गः, तत्र रूपकादिकृतवैचित्र्यस्यैव चमत्कारातिशयजनकतया तेनोपमावैचित्र्यस्य तिरोधानात् । एवं 'कण्ठे केवलमर्गलेव०' (५२९ पृष्ठे)— इत्यादावुपमायाः सन्देहसंकरत्वात् तया

१ प्रतिपत्तीति । निराकाङ्क्षप्रतिपत्तीत्यर्थः ॥ २ अलंकारत्वं वैचित्र्यम्, वैचित्र्यं च चमत्कारित्वम् ॥

अलंकारत्वमेव नास्ति, तथाऽपि तद्व्यवहारो भाक्त एव । एवं चोक्तरीत्यैवानन्वयवारणसंभवे भेदग्रहणमनर्थकमिव प्रतिभाति । अत एव रसगङ्गाधरकृद्भिरस्य दूषणावसरे "भेदग्रहणस्य वैयर्थ्यापत्तेः"—इत्युक्तम् । एवं चालंकारत्वे सति साधर्म्यमुपमेत्येव सम्यक् । उपमास्थले चोपमानम्, उपमेयम्, साधारणो धर्मः, साधर्म्यं चेति चतुष्टयमपेक्ष्यते इत्युक्तमेव ( ६०३ पृष्ठे ) । उपमानादिचतुष्टयं च सदसदपि, वाच्यं प्रतीयमानं च भवति । अत एव 'त्वयि कोपो ममाभाति सुधांशाविव पावकः'—इत्यादौ सुधांशौ पावकस्यासतोऽपि उपमानत्वसिद्धिः, कमलमिव मुखमित्यादौ लुप्तोपमास्थले प्रसिद्धतया साधारणधर्मस्यानुपात्तत्वेऽपि उपमासिद्धिश्चेति विवरणादौ स्पष्टम् । 'उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम् । तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ ( १ )'—इत्यादौ नोपमा, यदि तथाभूतौ स्यातां तदोपमीयेत, न चैवमित्युपमानिष्पत्त्यभावात्, किंतु "यद्यर्थोक्तौ च कल्पनम्"—इति वक्ष्यमाणरीत्याऽतिशयोक्तिरेवेत्युद्द्योते स्पष्टम् ॥

चन्द्र इव मुखमाह्लादकमित्यत्राह्लादकोपमानभूतचन्द्राभिन्नमाह्लादकं मुखमिति बोधः।अत एवेवादिसमभिव्याहारे उपमानोपमेययोः समानविभक्तिकत्वनियमः । साधारणधर्मसंबन्धश्च क्वचिद्विशेषणतया, यथा, चन्द्र इव मुखमाह्लादकमित्यादौ, क्वचिद्विशेष्यतया, यथा, चन्द्र इव मुखमाह्लादयतीत्यादौ, अत्र हि उपमानचन्द्रकर्तृकाह्लादाभिन्नः उपमेयमुखकर्तृक आह्लाद इति बोधः, अतोऽत्रापि तयोः समानविभक्तिकतैव । 'हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम्' इत्यादि तु असाध्वेव, समानविभक्तिकत्वाभावात् । ये त्वत्र चन्द्रसादृश्यप्रयोजको मुखकर्तृक आह्लाद इति बोधं वदन्ति, तेषां मते उपमानोपमेययोः समानविभक्तिकत्वनियमे मानं दुर्लभम् । विस्तरस्तु "क्यचि वाद्युपमेयासे"—इति सूत्रे निरूपयिष्यते । यत्तु वाचनिकी समानविभक्तिकतेति, तन्न, व्याकरणे तादृशवचनानुपलम्भात् । एवं 'गजराज इव गच्छति देवदत्तः'—इत्यादौ बोध्यम् । 'वनं गजराज इव शूरः समरभूमिं गच्छति'—इत्यादौ उपमानगजकर्तृकवनगमनाभिन्नमुपमेयशूरकर्तृकसमरकर्मकं गमनमिति बोधः । साधारणधर्मरूपगमनस्य विधेयतयोपमाविधेयिकाऽत्र धीः । 'व्याघ्र इव यः पुरुषः स गच्छति'—इत्यादौ उपमानशूरव्याघ्राभिन्नपुरुषकर्तृकं गमनमिति धीः । शूरत्वादिसाधारणधर्मस्योद्देश्यतयोपमोद्देश्यिकाऽत्र धीः । अत एव भेदाभेदप्रधानोपमेति वृद्धाः । यद्यपि चन्द्रमुखयोस्तत्त्वेन भेदः, तथाऽपि साधारणधर्मवेषेणाभेदान्वययोग्यता बोध्येत्युद्द्योते धात्वर्थवादमञ्जूषायां च स्पष्टम् ।

सारबोधिनीकारादयस्तु, अत्र 'चन्द्र इव मुखम्'—इत्यत्र यज्जातीयधर्माश्रयश्चन्द्रस्तज्जातीयधर्माश्रयो मुखमित्युभयविशेष्यकैव प्रतीतिः, नतु चन्द्रनिष्ठधर्मसजातीयधर्माश्रयो

---

१ अस्य श्रीकृष्णस्य वक्षः वक्षःस्थलम् । इदं पद्यं माघकाव्ये तृतीयसर्गे इति बोध्यम् ॥

## पूर्णा लुप्ता च,

### उपमानोपमेयसाधारणधर्मोपमा–प्रतिपादकानामुपादाने पूर्णा, एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता।

मुखमिति प्रकृतविशेष्यक एव प्रत्ययः, तथा सति 'हंसीव धवलश्चन्द्रः'–इत्यादौ प्रतीतिमान्थर्यविरहेण दोषो न स्यात्। हंसीनिष्ठधवलत्वसजातीयधवलत्ववत्तया चन्द्रप्रतीतौ सकलसहृदयानुभवसिद्धं प्रतीतिमान्थर्यं न स्यात्। उभयविशेष्यकत्वे तु पुंस्त्वान्वितधवलपदार्थस्य हंस्यामनन्वयेन चन्द्रमात्रान्वये विवक्षितप्रतीत्यनुपपत्तेर्दोषः संभवतीति ध्येयम्। 'चन्द्र इव मुखमाह्लादकम्'–इत्यत्र तु आह्लादकपदस्योभयगामित्वेऽपि नपुंसकस्य मुखपदस्य लिङ्गग्रहणं "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" (१।२।६९)–इति पाणिन्यनुशासनादित्याहुः॥

अथोपमां विभजते **पूर्णा लुप्ता चेति**। उपमा तावद् द्विविधा, पूर्णा साङ्गा, लुप्ता निरङ्गा चेत्यर्थः। तत्राद्यामाह **उपमानेत्यादि**। साधारणधर्मवत्त्वेन प्रसिद्धः पदार्थ उपमानम्, तद्धर्मवत्तया वर्णनीयः पदार्थ उपमेयम्, उपमाने उपमेये च सङ्गतो धर्मः साधारणधर्मः, गुणक्रियादिरूप इत्यर्थः, उपमाप्रतिपादकाः उपमाबोधकाः, इवादितुल्यादिशब्दा, इत्यर्थः (१), एतेषां चतुर्णामुपादाने निर्देशे (ग्रहणे) पूर्णा पूर्णोपमेत्यर्थः। द्वितीयामाह **एकस्येति**। एतेषा चतुर्णां मध्ये एकस्य द्वयोस्त्रयाणा वा लोपे अनुपादाने (अनुक्तौ) लुप्ता लुप्तोपमेत्यर्थः॥

---

१ ते चोपमाप्रतिपादकाः काव्यादर्शे दण्डिनोक्ता, तथाहि, "इववद्वायथाशब्दाः समाननिभसंनिभाः। तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः॥ १॥ प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः। सदृक्सदृशसंवादिसजातीयानुवादिनः॥ २॥ प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः। सलक्षणसदृक्षाभसपक्षोपमितोपमाः॥ ३॥ कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिधी अपि। सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः॥ ४॥ समासश्च बहुव्रीहिः शशाङ्कवदनादिषु। स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति॥ ५॥ आक्रोशत्यवजानाति कदर्थयति निन्दति। विडम्बयति संधत्ते हसतीर्ष्यत्यसूयति॥ ६॥ तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति। तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति॥ ७॥ तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते। तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति॥८॥ तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः॥९॥"–इति।

सादृश्यसूचका इति। सादृश्यस्य बोधकाः, वाचका लक्षका व्यञ्जकाश्चेत्यर्थः। तत्रेवादयो वाचकाः, स्पर्धते–इत्यादयो लक्षकाः, स्पर्धादिधातूनां सादृश्ये सङ्केतितत्वाभावात्। तस्य मुष्णाति सौभाग्यम्–इत्यादयो व्यञ्जका इति व्याख्यातारः॥

साऽग्रिमा ।

श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥ ८७ ॥

अग्रिमा पूर्णा ।

---

तयोः पूर्णां षड्विधतया विभजते साऽग्रिमेत्यादि । सा अग्रे भवा (प्रागुद्दिष्टा) अग्रिमा पूर्णोपमेत्यर्थः । पूर्णैव तावत् द्विधेत्याह श्रौत्यार्थी चेति । श्रौती शब्दगम्या, वाच्येति यावत्, सा च यथेवादिशब्दोपादाने, इवार्थविहितवतिप्रत्ययोपादाने च भवति, यथादिशब्दानां साधर्म्यसंबन्धरूपधर्मवाचकतया तत्सद्भावे श्रवणमात्रेणैव साधर्म्यसंबन्धस्य मुख्यतयोपस्थितेः । यथादिशब्दानां धर्मवाचकत्वादेव "चादयोऽसत्त्वे" (१।४।५७)–इति पाणिनिसूत्रेण (१) निपातसंज्ञायां सत्यां "स्वरादिनिपातमव्ययम्" (१।१।३७)–इति सूत्रेण(२) अव्ययसंज्ञा सिद्ध्यति, तुल्यसदृशादिशब्दानामिव धर्मिवाचकत्वे तु असत्त्वे (अद्रव्ये) इति पर्युदासात् निपातसंज्ञाया अभावेऽव्ययसंज्ञा न स्यादिति बोध्यम् । आर्थी अर्थवशलभ्या, आक्षेपगम्येत्यर्थः, सा च तुल्यसदृशादिशब्दानामुपादाने तुल्यार्थविहितवतिप्रत्ययस्योपादाने च भवति, तुल्यादिशब्दानां साधर्म्यसंबन्धसंबन्धिरूपधर्मिवाचकतया तत्सद्भावे तादृशधर्मिणः (उपमानस्य, उपमेय उभयस्य वा) एव मुख्यतयोपस्थितेः साधर्म्यस्यार्थाक्षिप्तत्वात् । एतत्सर्वमनुपदं मूले एव स्फुटीभविष्यति । एवं द्विविधाऽपि पूर्णा वाक्य-समास-तद्धितगामित्वभेदात् षड्विधेत्याह भवेद्वाक्ये इत्यादि । वाक्यं विग्रहः, यद्वा, ऐकपद्यानापन्नमाकाङ्क्षादिमत् अनेकं पदं वाक्यम्, समासत्ववान् समासः, समासत्वं च संकेतविशेषसंबन्धेन समासपदवत्त्वम्, तद्धितः तद्धितसंज्ञको वतिप्रत्ययादिः । श्रौती आर्थी च प्रत्येकं वाक्ये समासे तद्धिते च भवेदित्यर्थः । तथा चोपमानादिपदानि चत्वार्यपि यद्यसमस्तानि तदा वाक्यगा, तेषु (३) कयोरपि समस्तत्वे समासगा, तद्धितप्रत्ययस्य न वाक्यत्वं न वा समासत्वमिति पृथगुक्तिः । एवं च श्रौत्यार्थी चेति द्विविधाऽपि पूर्णोपमा प्रत्येकं वाक्यादिगतत्वेन त्रिविधा भूत्वा षड्विधेति भावः । अग्रिमापदस्य लुप्तापरत्वभ्रमं वारयति अग्रिमा पूर्णेति । व्याख्यातमिदं प्रदीपोद्द्योतयोरपि, श्रौतत्वं चोपमानोपमेययोः साधारणधर्मसंबन्धरूपायास्तस्याः शाब्दबोधविषयत्वम् । अर्थापत्तिगम्यत्वं चार्थत्वमिति प्रदीपः । श्रौतत्वं चोपमानेति । एवं च सादृश्यप्रयोजकसाधारणसंबन्धस्येवादिशक्यस्योभयवृत्तितया शाब्दबोधविषयत्वे श्रौतत्वमित्यर्थः । अर्थापत्तीति । तुल्यादीनां सादृश्यवति शक्तेः सादृश्यस्य साधारणधर्मसंबन्धं विनाऽनुपपत्त्या तत्प्रतीतिरिति भाव इत्युद्द्योतः ॥

---

१ अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युरिति तदर्थः ॥ २ स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युरिति तदर्थः ॥ ३ उपमानादिषु चतुर्षु पदेषु मध्ये ॥

यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते; तथाऽपि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत् संबन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा। तथैव, "तत्र तस्येव"—इत्यनेनेवार्थे विहितस्य वतेरुपादाने।

---

यथेववादिशब्दानां साधर्म्यसंबन्धवाचकत्वम्, यथेववादिशब्दसद्भावे उपमायाः श्रौतत्वं (१) च प्रतिपादयन् तावत् शङ्कते यथेववादीति। आदिना वशब्दपरिग्रहः। "व (२) वा यथा तथेवैवं साम्ये"— इत्यमराद्वशब्दस्याप्युपमावाचकत्वात्। यत्पराः यदनन्तरमुपात्ताः। तस्यैव तदर्थस्यैव। एते इति। यथेववादिशब्दा इत्यर्थः। अयमत्र शङ्काभिप्रायः, यद्धि यदर्थे धर्मविशेषं प्रतिपादयति, तत् तद्विशेषणम्; एकविशेषणं च नापरत्र स्वार्थं प्रत्याययति,—इति नियमः, यथा, नीलमुत्पलमित्यादौ नीलपदमुत्पलपदार्थे स्वार्थं प्रत्याययत् उत्पलपदस्य विशेषणं भवति, ततश्च नान्यत्र स्वार्थं प्रत्याययति, तथा, 'मुखं मनोज्ञं कमलं यथैतत्'—इत्यादौ यथाशब्दः कमलपदोत्तरमुपात्तत्वेन कमलपदार्थे उपमानतां प्रत्याययतीति कमलपदस्य विशेषणमिति उपमानभूते कमले एव साधारणधर्मसंबन्धं बोधयतु, तदन्यस्मिन् उपमेये मुखे कथं तदवगमयेत्'—इति उपमानोपमेययोः साधर्म्यस्य शब्दागम्यत्वात्कथं श्रौतत्वमिति। उक्तशङ्कां समाधत्ते तथाऽपीति। शब्दशक्तिमहिम्ना शब्दशक्तिस्वाभाव्येन, "विचित्राः शब्दशक्तयः"—इति न्यायात् शब्दशक्तिवैचित्र्येणेति यावत्। श्रौतत्वं व्युत्पादयति श्रुत्यैवेति। श्रवणमात्रेणेत्यर्थः, न तु तुल्यादिशब्दा इवाक्षेपेणेति भावः। तत्र दृष्टान्तमाह षष्ठीवदिति। षष्ठी विभक्तिरिवेत्यर्थः। संबन्धं (प्रकृते) उपमानोपमेययोः साधारणधर्मसंबन्धरूपं साधर्म्यम्। तत्सद्भावे यथेववादिशब्दसद्भावे। अयमत्र समाधानाभिप्रायः, राज्ञो राज्यमित्यादौ स्वप्रकृत्यनन्तरमुपात्ता षष्ठी विभक्तिः स्वप्रकृत्यर्थे राजनि स्वामित्वं प्रत्याययन्ती तद्विशेषणं भवन्त्यपि यथा राजराज्ययोः स्वस्वामिभावं संबन्धं प्रत्याययति, तथा उपमाने उपमानतां प्रत्याययन्तोऽपि यथादिशब्दाः उपमानोपमेययोः साधर्म्यसंबन्धं श्रवणमात्रेणोपस्थापयन्त्येव शब्दशक्तिस्वाभाव्यात्, तथा च यथादिशब्दानां साधर्म्यसंबन्धवाचकत्वं तत्सद्भावे उपमायाः श्रौतत्वं चोपपन्नमिति। विशेषणत्वमभ्युपेत्यायं सिद्धान्तः, वस्तुतस्तु यथादयः शब्दाः नोपमानविशेषणानि, न हि 'यत् यदर्थे धर्मविशेषं प्रतिपादयति, तत्

---

१ श्रौतत्वमित्ययं प्रयोगः "वोतो गुणवचनात्" (४।१।४४) इति सूत्रे "स्वाङ्गोर्गुणवचनस्य"—इति वार्तिकोक्तशब्देन्दुशेखररीत्या बोध्यः। अत एव 'कारकविभक्तेर्बलवत्त्वात्'—इति शब्देन्दुशेखरप्रयोगः सङ्गच्छते। कौमुदीकारीत्या तु श्रौतीत्वमिति प्रयोक्तव्यम्, यद्वा, 'शरद कृतार्थता'—इत्यादिवत् "सामान्ये नपुंसकम्"—इति नपुंसकत्वविवक्षा वा। एवमग्रेऽप्यार्थत्वमिति प्रयोगोऽपि ज्ञेयः॥ २ सादृश्ये वशब्दो यथा, शाश्वत व वपुरीशः इति। 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम'—इत्यत्र इवार्थे वशब्दो वाशब्दो वा बोध्य इति सिद्धान्तकौमुदी॥

'तेन तुल्यं मुखम्'–इत्यादावुपमेये एव, 'तत्तुल्यमस्य'–इत्यादौ चोपमाने एव, 'इदं च तच्च तुल्यम्'–इत्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्यार्थत्वात्तुल्यादिपदोपादाने आर्थी; तद्वत्, "तेन तुल्यं क्रिया चेद्वतिः"–इत्यनेन विहितस्य वतेः स्थितौ।

---

तद्विशेषणम्'–इति नियमः, किंतु 'यदर्थस्य यदर्थेऽन्वयबोधः, तत् तद्विशेषणमित्येव नियमः, न च यथादयः शब्दा उपमानतार्थकाः, येनोपमाने तदन्वयबोधं जनयन्त उपमानविशेषणानि स्युः, यथादिशब्दैरुपमानताप्रतीतिस्तु नान्वयबोधरूपा, किं त्वर्थवशासंपन्नेति न यथादिशब्दः उपमानविशेषणमिति विवरणे स्पष्टम्। उद्द्योतकारास्तु एवं व्याचख्युः, उपमानविशेषणानीति। उपमानविशेषणोपमानत्वद्योतकानीत्यर्थः, उपमानं विशिंषन्ति उपमानत्ववैशिष्ट्येन बोधयन्तीत्यर्थात्। न च तस्य सादृश्यप्रतियोगित्वरूपोपमानत्वविशिष्टस्य स्ववृत्तिधर्मवत्त्वसंबन्धेनोपमेयेऽन्वयेनोपमेयेऽपि तल्लाभः, नामार्थयोरभेदेनान्वयाव्युत्पत्तेः। एवंच शक्त्योभयत्र साधारणधर्मसंबन्धाप्रतीत्या नायं श्रौत्यार्थीविभाग उचित इति भाव इति।

तद्धितमात्रे न श्रौतत्वं किंतु इवार्थविहितवतावेवेत्याह तथैवेति। तद्वदित्यर्थः, यथेववादिशब्दोपादानवदिति यावत्। इत्यनेनेति। "तत्र तस्येव" (५।१।११६)। इति पाणिनिसूत्रेण (१)–इत्यर्थः। इवार्थे सादृश्ये। विहितस्य बोधितस्य। वतेः वतिप्रत्ययस्य। उपादाने स्थितौ, प्रयोगे इति यावत्। 'श्रौती उपमा'–इत्यनुपज्यते। उदाहरणं तु 'गम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजंगवत्'–इत्यग्रे स्फुटीभविष्यति॥

तुल्यादिशब्दानां धर्मिवाचकत्वं प्रतिपादयन् तत्सद्भावे उपमाया आर्थत्वं (२) व्यवस्थापयति तेन तुल्यमित्यादि। अत्र सर्वत्र तत्पदार्थः कमलम्, इदंपदार्थश्च मुखम्। उपमेये एवेति, उपमाने एवेति च विश्रान्तिरित्यनेनान्वेति। उभयत्र उपमाने उपमेये च। तुल्यादीति। आदिशब्दात् समसदृशादिपरिग्रहः। विश्रान्तिः पर्यवसानम्, तात्पर्यमिति फलितोऽर्थः। साम्येति। साम्यं साधर्म्यं तस्य पर्यालोचनयाऽनुसंधानेन, तुल्यता साधर्म्यसंबन्धसंबन्धिता, सा च तेन तुल्यं मुखमित्यादावुपमेयतारूपा, तत्तुल्यमस्येत्यादावुपमानतारूपा, इदं च तच्च तुल्यमित्यादावुभयरूपैव पर्यवस्यतीति साधर्म्यापेक्षया तुल्यताया भेदः। साधर्म्यस्य साम्यस्य। आर्थत्वात् अर्थाक्षिप्तत्वात्। उपादाने प्र-

---

१ सूत्रेणेति। तत्रेति सप्तम्यन्तात्, तस्येति षष्ठ्यन्ताच्च इवार्थे (सादृश्ये) वतिप्रत्ययो भवतीति सूत्रार्थः। सप्तम्यन्तात् यथा, मथुरावत् स्रुघ्ने प्राकारः। अत्र मथुरायामिव मथुरावदिति विग्रहः। उपमेये सप्तमीदर्शनादत्र सप्तम्यन्तादेव वतिप्रत्ययः। मथुरायां यादृशः प्राकारस्तेन तुल्यः प्राकारः स्रुघ्ननामकदेशे इत्यर्थः। षष्ठ्यन्ताद्यथा, चैत्रवत् मैत्रस्य गावः। अत्र चैत्रस्येव चैत्रवदिति विग्रहः। उपमेये षष्ठीदर्शनादत्र षष्ठ्यन्तादेव वतिप्रत्ययः। चैत्रस्य यादृशा गावस्ताभिस्तुल्या गावः मैत्रस्येत्यर्थः॥ २ आर्थत्वमिति। अयं प्रयोग. समर्थितः प्राक् (६०९ पृष्ठे)॥

"इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च"—इति नित्यसमासे इवशब्दयोगे समासगा ।

---

योगे। अयं भावः, तुल्यादिशब्दानामुक्तरूपधर्मिवाचकतया यद्यपि तत्सद्भावे साधर्म्यं शब्दान्न प्रतीयते, तथाऽपि अर्थादाक्षिप्यत एव तदित्यार्थत्वम्, तथाहि, कमलेन तुल्यं मुखमित्यत्र प्रथमत एव शब्दात् तुल्यमुखयोरभेदान्वयबोधः, ततश्च मुखस्य कमलतुल्यताप्रतीतिरिति निर्विवादम्, सा तु प्रतीतिः कमलमुखयोः साधर्म्यानुसंधान विनाऽनुपपन्ना, कमलमुखयोः साधर्म्यं विना कमलेन मुखस्य तुल्यतायाः (साधर्म्यसंबन्धसबन्धितारूपायाः) एवानिष्पत्तेरिति तुल्यताप्रतीत्यनुपपत्त्याऽर्थादाक्षिप्यत एव साधर्म्यमितीति विवरणे स्पष्टम् ।

तद्धितगामार्थीमाह तद्वदिति । तुल्यादिपदोपादानवदित्यर्थः । इत्यनेनेति । "तेन तुल्यं क्रिया चेद्वतिः" (५।१।११५) इति पाणिनिसूत्रेणेत्यर्थः । विहितस्य बोधितस्य । वतेः वतिप्रत्ययस्य । स्थितौ उपादाने, प्रयोगे इति यावत् । तद्धितगा आर्थीति भावः। अत्र (पाणिनिसूत्रे) तुल्यमिति सामान्ये नपुंसकं प्रथमान्तं च, व्यापारविशेषणत्वात् । तथा च, तेनेति तृतीयान्तात् तुल्यमित्यर्थे वतिप्रत्ययो भवति, यत्तुल्यं क्रिया चेत्सेति तदर्थः। उपमेयस्य क्रियात्वे उपमानवाचकात् तृतीयान्तात्तुल्यमित्यर्थे वतिप्रत्ययो भवतीति भावः । यथा, 'ब्राह्मणवत् अधीते क्षत्रियः'—इति । ब्राह्मणेन तुल्यं ब्राह्मणवदिति विग्रहः । नन्वत्र कथं वतिप्रत्ययः, ब्राह्मणसादृश्यस्याध्ययनेऽभावादिति चेत्, न; ब्राह्मणशब्दस्य तत्कर्तृकाध्ययने लाक्षणिकत्वात् । सौष्ठवादिश्च साधारणो धर्मः । तथा च ब्राह्मणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकं वर्तमानकालिकमध्ययनमिति बोधः । नन्वत्र क्रियाचेदिति किमर्थमिति चेत्, गुणतुल्ये वतिप्रत्ययो मा भूदिति । तेन 'पुत्रेण तुल्यः स्थूलः' —इति वाक्यमेव तिष्ठति, न तु वतिप्रत्यय इति बोध्यम् ।

समासगां श्रौतीमाह इवेनेत्यादि । इतीति । "सुपो धातुप्रातिपदिकयोः"—(२।४।७१)—इतिपाणिनिसूत्रव्याख्यानावसरे सिद्धान्तकौमुद्यां, "सह सुपा" (२।१।४) —इति सूत्रे महाभाष्ये च दृष्टेन "इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च"—इति कात्यायनकृतवार्तिकेनेत्यर्थः । 'अनेन सूत्रेण'—इति सारबोधिनीकारोक्तं तु भ्रममूलकमेवेति मन्तव्यम् । "सुपा"—इति विभक्तसूत्रेणैव समासे सिद्धे कार्यान्तरविधानार्थमिदं वचनमिति कैयटे स्पष्टम् । इवशब्देन सह समर्थस्य सुबन्तस्य समासः, विभक्तेः अलोपः लोपाभावः, पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यमिति वार्तिकार्थः । पूर्वपदे प्रकृतिस्वरत्वमिति भावः, समासाभावे यः स्वर स एव, न तु समासस्वर इति यावत् । उदाहरणं तु 'जीमूतस्येव'—इति । अत्र समासावयवस्य सुपोऽलोपविधानेऽपि समासा-

क्रमेणोदाहरणम्,

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥

---

दुत्पन्नस्य सोः "अव्ययादाप्सुपः" (२।४।८२)–इति सूत्रेण लुग्भवत्येव, अनुपसर्जने तदन्तस्याप्यव्ययत्वात् । अत्र यथार्थत्वादिप्रयुक्तोऽव्ययीभावस्तु न, "तत्र तस्येव"–इति निर्देशात् । अस्य च समासस्य सुप्सुपसमास इत्येव नाम । अव्ययीभाव-तत्पुरुषादिविशेषसंज्ञास्तु न सन्त्येव, तदधिकारेष्वपाठात् । समासफलं तु 'अग्निरिवराजः'–इत्यादौ "राजाहःसखिभ्यष्टच्" (५।४।९१)–इत्यादिसूत्रविहितसमासान्तादिसिद्धिरिति बोध्यम् । व्याकरणे समासस्य वैकल्पिकत्वाङ्गीकारात्, वार्तिके नित्यपदघटितपाठाभावाच्चात्र नित्यपदप्रक्षेपोऽप्रामाणिक इत्युद्द्योते स्पष्टम् । अत एव "जीमूतस्येव प्रतीकम्"–इत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः । अत एव च 'अनयेनेव राज्यश्रीः'–इति वक्ष्यमाणमालोपमोदाहरणे 'भुजंगमस्येव मणिः सदम्भाः'–इति वक्ष्यमाणयमकदोषोदाहरणे च 'उद्बाहुरिव वामनः'–इति 'जुगोप गोरूपधरामिवोर्वीम्'–इति रघुकाव्ये च व्यस्तप्रयोगाः संगच्छन्ते । अत एव च रसगङ्गाधरकारोऽपि 'प्रावृषेण्य इव वारिधरो मे वेदनां हरतु वृष्णिवरेण्यः'–इत्यादौ (प्रावृषेण्यो वारिधर इव–इत्येवान्वयस्य कर्तव्यत्वात्) वाक्यगत इवशब्द इत्युदाजहारेति दिक् ॥

एवं षड्विधां पूर्णामुपपाद्य, तत्र वाक्यगां श्रौतीमुदाहरति स्वप्नेऽपीति । हे राजन् स्वाधीनपतिका स्वाधीनः आकृताज्ञाकारी पतिर्यस्यास्तादृशी नायिका यथा प्रभावस्य प्रकृष्टानुरागस्य प्रभवमुत्पत्तिहेतुं कान्तं कमनीयं नायकं न मुञ्चति न परित्यजति, तथा विजयश्रीः जयलक्ष्मीः प्रभावस्य प्रभुत्वस्य प्रभवमुत्पत्तिहेतुम्, यद्वा, प्रभावात्तपोविशेषात् प्रभव उत्पत्तिर्यस्य तादृशं त्वां समरेषु संग्रामेषु (न त्वेकस्मिन् समरे) स्वप्नेऽपि स्वप्नावस्थायामपि न मुञ्चतीत्यर्थः । वैरिभिः स्वप्नेऽपि तव विजयानुभवादिति भावः । एवं च स्वप्नोऽत्र वैरिणामेव । प्रकृतनृपस्येति केचित्, विजयश्रिय इति कश्चित् ।

अत्र स्वाधीनपतिका उपमानम्, विजयश्रीरुपमेया, न मुञ्चतीत्यपरित्यागः साधारणो धर्मः, यथेत्युपमाप्रतिपादकम् । न चैतेषां मध्ये कयोरपि समासः, "यथाऽसादृश्ये" (२।१।७)–इति पाणिनिसूत्रेणासादृश्ये एव समासनियमेन सादृश्ये समासाभावाद्वाक्यमिति वाक्यगा श्रौती पूर्णेति बोध्यम् । अत्र यत्तत्पदप्रकृतिकप्रकारवाचिथाल्प्रत्ययान्तयथादिशब्दयोगे यद्धर्मवती स्वाधीनपतिका तद्धर्मवती विजयश्रीरिति उभयविशेष्यको बोधः, पश्चात् यत्तद्भ्यां धर्मस्यैक्यबोधात् सादृश्यं फलति, राज्ञः कान्तस्य च बिम्बप्रतिबिम्ब-

चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः सममिति चेतसि सम्मदं विधत्ते ॥
अत्यायतैर्नियमकारिभिरुद्धतानां, दिव्यैः, प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार ॥

---

भावः, तदालिङ्गितस्वभाधिकरणकत्यागाभावोऽनुगामी साधारणधर्म इति बोध्यमिति प्रदीपोद्द्योतयोः स्पष्टम् ॥

वाक्यगामार्थीमुदाहरति चकितेति। कस्याश्चिन्नायिकायाः सौभाग्यं सखीं प्रत्यनेन पद्येन कयाचिन्निवेद्यते। चकितः त्रस्तो (भीतो) यो हरिणः कुरङ्गः तस्य लोले चञ्चले लोचने नेत्रे इव लोचने यस्याः, यद्वा, हरिणशब्दस्य तल्लोचने लक्षणेति तरुणिमनीत्युदाहरणे स्फुटीभविष्यति, तथा च, चकितहरिणवत् लोले लोचने यस्यास्तथाभूतायाः तस्याः नायिकायाः क्रुधि क्रोधे सति तरुणो योऽरुणः सूर्यसारथिस्तद्वत् तारा उद्भटा (उत्कटा) पुष्टा वा हारिणी मनोहरा, यद्वा, तरुणारुणो गाढरक्तो यः तारो मुक्ताहारस्तस्य हारिणी अनुकारिणी कान्तिः शोभा यस्य तादृशम् आननम्, इदं हस्तस्थं सरसिजं रक्तोत्पलं च समं समानमिति हेतोः चेतसि नायकचित्ते सम्मदं हर्षं विधत्ते कुरुते इत्यर्थः। "प्रमदसम्मदौ हर्षे" (३।३।६८)-इति पाणिनिसूत्रेण सम्मदशब्दो हर्षे निपात्यते। "हर्षः प्रमोदामोदसम्मदाः"—इत्यमरः। "तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके। तारं च रजतेऽप्युच्चस्वरेऽप्यन्यवदीरितम्"—इति विश्वः। पुष्पिताग्रा छन्दः। लक्षणमुक्तं प्राक् (९७पृष्ठे)।

अत्र सरसिजमुपमानम्, आननमुपमेयम्, अरुणसदृशकान्तिमत्त्वं साधारणो धर्मः, समशब्दः उपमाप्रतिपादकः, समशब्देन सह समासाभावाद्वाक्यमिति वाक्यगाऽऽर्थी पूर्णेति बोध्यम्। अत्र सरसिजमाननं च सममित्यत्र प्रथमं सादृश्यवदभिन्नमिदं द्वयमिति बोधे पश्चान्मनसा व्यञ्जनया वा परस्परनिरूपितसाधारणधर्मसंबन्धप्रतीतिरिति ध्येयमित्युद्द्योते स्पष्टम् ॥

समासगां श्रौतीमुदाहरति अत्यायतैरिति। शौरिः श्रीकृष्णः चतुर्भिः चतुःसंख्याकैः भुजैरिव यः प्रकृतो राजा चतुर्भिरुपायैः सामदानभेदविग्रहरूपैः सदा सर्वदा अदः एतत् भुवनं लोकं बभार पुपोष (पालयामास)—इत्यन्वयः। भुजोपाययोः श्लिष्टविशेषणान्याह अत्यायतैरित्यादि। अत्यायतैः अत्यन्तदीर्घैः (आजानुलम्बिभिः), अत्यन्तमायतिरुदर्कशुद्धिर्येषु तथाभूतैश्च। उद्धतानां दानवानां नियमकारिभिः शिक्षकैः, उद्धतानां गर्ववतां नियमकारिभिः दण्डप्रदैश्च। दिव्यैः दिवि स्वर्गे भवैः (अलौकिकैः), उत्कृष्टैश्च। प्रभाभिः कान्तिभिः प्रभावैश्च 'उपलक्षितैः'—इति शेषः। यद्वा, प्रकर्षेण भान्तीति प्रभास्तैः, प्रकृष्टशोभावद्भिः। "क्विप् च" (३।२।१६)—इति सूत्रेण

अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवान् अभिलषणीयः क्षितीश्वर ! न कस्य ॥
गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजंगवत् ।
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥

---

भातेः कर्तरि क्विप्प्रत्ययः, विश्वपा इतिवत्, "आतो मनिन्क्वनिब्वनिपश्च" (३।२।१४) —इति चकारात् विच्प्रत्ययो वा । केचित्तु, प्रभाभिः दीप्तिभिः प्रभावैश्च दिव्यैः अलौकिकैरुत्कृष्टैश्चेत्यन्वयमाहुः । अनपायमयैः अपायाभावप्रचुरैः, सदातनैः सदा सफलैश्चेति भावः । लक्ष्म्याः कमलायाः संपत्तेश्च विलासस्य भवनैः आधारभूतैरित्यर्थः । लक्ष्मीविलासभवनत्वमुपायानां तत्प्रयोजकत्वादिति बोध्यम् । वसन्ततिलका छन्दः । लक्षणमुक्तं प्राक् ( ६४ पृष्ठे ) ।

अत्र भुजैरित्युपमानम्, उपायैरित्युपमेयम्, अत्यायतत्वादिः साधारणो धर्मः, इवशब्दः उपमाप्रतिपादकः, भुजैरिवेत्यत्र "इवेन समासो विभक्त्यलोपः"—इति वार्तिकेन समासपक्षे समासगा श्रौती पूर्णेति बोध्यम् । समासाभावे तु वाक्यगैव । भुजैरिवोपायैरित्यत्र भुजसादृश्यप्रयोजकात्यायतत्वादिधर्मवद्भिरित्यादिरेव बोधः । गजो वनं गच्छतीव शूरः समरभूमिं गच्छतीत्यादौ क्रियासमभिव्याहृतेवादेरुत्प्रेक्षाद्योतकत्वमेवेति न तत्रोपमालंकार इत्युत्प्रेक्षालंकारे स्फुटीभविष्यति ॥

समासगामार्थीमुदाहरति अवितथेति । हे क्षितीश्वर अवितथाः अव्यर्थाः (सफलाः) ये मनोरथपथाः तेषां प्रथनेषु विस्तारणेषु, इयं विषयसप्तमी, अव्यर्थवाञ्छितविषयविस्तारे इति यावत्, प्रगुणगरिमगीतश्रीः प्रकृष्टगुणानां गरिम्णा गुरुत्वेन गीता ( लोकैः ) स्तुता श्रीः संपत्तिर्यस्य तथाभूतः । अत एव सुरतरुसदृशः कल्पवृक्षतुल्यः स प्रसिद्धो भवान् कस्य पुरुषस्य न अभिलषणीयः न स्पृहणीयः, अपितु सर्वस्याप्यभिलषणीय एवेत्यर्थः । गीतिश्छन्दः । लक्षणमुक्तं प्राक् ( २ पृष्ठे ) ।

अत्र सुरतरुरुपमानम्, भवानित्युपमेयम्, प्रगुणगरिमगीतश्रीत्वम् अभिलषणीयत्वं वा साधारणो धर्मः, सदृशशब्द उपमाप्रतिपादकः, सुरतरुसदृश इति उपमानोपमाप्रतिपादकयोः समास इति समासगाऽऽर्थी पूर्णेति बोध्यम् ॥

प्रथमार्धेन तद्धितगां श्रौतीम्, अपरार्धेन तद्धितगामार्थीं चोदाहरति गाम्भीर्येति । तस्य प्रकृतस्य राज्ञः गङ्गाभुजङ्गवत् गङ्गायाः भुजंगः उपपतिः ( समुद्रः ) शन्तनोरेव पतित्वात्, तस्येव तद्वत् गाम्भीर्यगरिमा गाम्भीर्यं दुर्ज्ञेयान्तःकरणत्वम् अतलस्पर्शित्वं च तस्य गरिमा गुरुत्वं सत्यमित्यर्थः । "भुजंगो विटसर्पयोः"—इति विश्वः । स राजा समरे

स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूः, तथा, जयश्री-

---

संग्रामे निदाघाम्बररत्नवत् निदाघो ग्रीष्मकालस्तत्र यत् अम्बररत्नं सूर्यः तेन तुल्यस्तद्वत् निदाघकालिकसूर्यवत् दुरालोकः दुःखेनालोकयितुं शक्य इत्यर्थः ।

अत्र पूर्वार्धे गङ्गाभुजंगः उपमानम्, तस्येत्युपमेयम्, गाम्भीर्यगरिमा साधारणो धर्मः, भुजङ्गवदित्यत्र "तत्र तस्येव"—इति सूत्रेण षष्ठ्यन्तादिवार्थे वतिप्रत्यय इति तद्धितगा श्रौती पूर्णेति बोध्यम् । उपमेये षष्ठीदर्शनादत्र षष्ठ्यन्ताद्वतिः । उत्तरार्धे तु निदाघाम्बररत्नमुपमानम्, स इत्युपमेयम्, दुरालोकत्व साधारणो धर्मः, अम्बररत्नवदित्यत्र "तेन तुल्यं क्रिया चेद्वतिः"—इति सूत्रेण तृतीयान्तात्तुल्यार्थे वतिप्रत्यय इति तद्धितगाऽऽर्थी पूर्णेति बोध्यम् ।

पूर्वत्र बोध उक्तदिशा ऊह्यः । उत्तरत्र तु निदाघाम्बररत्नतुल्याभिन्नो दुरालोक इति बोधः । तुल्यत्वप्रयोजकं च दुरालोकत्वमिति पश्चान्मनसा व्यञ्जनया वा बुध्यते । म चेत्थम्, उपमानदुरालोकनिदाघाम्बररत्नाभिन्नो दुरालोको राजेत्येवमिति बहवः । अत एवार्थीत्वम्, नामार्थयोरभेदान्वयस्यैतद्विग्रहवाक्ये क्लृप्त[स्य] निर्वाहायास्य वतेरपि धर्मिवाचकतैवोचिता, अनुशासनस्य तथैव शक्तिग्राहकत्वाच्च । क्रिययोस्तुल्यत्वे एव "तेन तुल्यम्"—इति वतिः साधुः । अत एव 'ब्राह्मणवदधीते'—इत्यत्र ब्राह्मणपदस्य तत्कर्तृकाध्ययने लक्षणेति महाभाष्यकृतः । एवं च 'चन्द्रवन्मुखम्'—इत्यादौ भवतिक्रियामध्याहृत्य चन्द्रभवनसदृशं मुखभवनमित्येव वाच्योऽर्थः । चन्द्रमुखयोः सादृश्यं तु व्यञ्जनयैवेति बोध्यम् । गङ्गाभुजङ्गवदित्यत्र गङ्गाभुजंगपदस्य तत्संबन्धिगाम्भीर्यगरिमलक्षकत्वेन गङ्गाभुजगसंबन्धिगाम्भीर्यसदृशमेतत्संबन्धिगाम्भीर्यमिति बोधः । तदनन्तरं गाम्भीर्ययोः सादृश्यमूलकाभेदाध्यवसायेनाभिन्नधर्ममूला पश्चात् गङ्गाभुजंग-राज्ञोरुपमाप्रतीतिः । गङ्गाभुजंगस्येवास्य गाम्भीर्यगरिमेत्यादिवाक्ये षष्ठ्युपपत्तये गाम्भीर्यगरिमेत्यस्यावृत्त्या गङ्गाभुजंगेऽप्यन्वयेन तादृशबोधस्यैवानुभवेन वृत्तावपि तथैवौचित्यात् । एवमरविन्दतुल्यो भातीत्यस्यारविन्दतुल्यकर्तृक भानमिति वाच्योऽर्थः । भानमेव च साधारणो धर्मः । एवं चोपमाविधेयिका धीः । यदा तु धर्मान्तरेण तुल्यत्वं तदोपमाया उद्देश्यतावच्छेदकत्वमिति उद्द्योते स्पष्टम् ॥

ननु "गुणालंकारयुक्तमव्यङ्ग्यं चित्रम्"—इति प्रथमोल्लासे (१२ पृष्ठे) उक्तम्. अलंकारस्थले च सत्यपि तद्वैचित्र्ये व्यङ्ग्यस्यानुभवसिद्धतया ध्वनि—गुणीभूतव्यङ्ग्यान्यतरत्वसंभवे कथं चित्रत्वमित्याशङ्क्ते स्वाधीनेत्यादिना 'अलंकारः'—इत्यन्तेन । अथा.

**स्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तेर्वैचित्र्यम्, वैचित्र्यं चालंकारः, तथाऽपि न ध्वनि-गुणीभूतव्यङ्ग्यव्यवहारः, न खलु व्यङ्ग्यसंस्पर्श-परामर्शादत्र चारुताप्रतीतिः, अपि तु वाच्यवैचित्र्यप्रतिभासादेव ।**

---

ननु षष्ठोल्लासे ( २९२ पृष्ठे ) "अत्र च शब्दार्थालंकारभेदात् बहवो भेदाः"—इत्यभिहितम्, तच्चाभिधानं तदैवावितथं स्यात्, यद्यलंकारप्रभेदेषु विद्यमानेषु चित्रकाव्यत्वस्य संभवः स्यात्, स एव न, उपमादीनामर्थालंकाराणां व्यङ्ग्यस्वरूपतया तत्सद्भावे (तादृशव्यङ्ग्यस्य प्राधान्ये) ध्वनित्वस्य, (अप्राधान्ये) गुणीभूतव्यङ्ग्यत्वस्य वा संभवेन अव्यङ्ग्यत्वरूपस्य चित्रकाव्यत्वस्य दुरुपपादत्वात्; तथा हि, स्वप्नेऽपीत्यादावुदाहरणे, 'स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारविषयः, तथा जयश्रीस्त्वदासेवनेन'—इत्यादिव्यङ्ग्यरूपैवोपमा वाच्यार्थस्य उत्कर्षाधायकतया अलंकारः, तया विना वैचित्र्यान्तरस्यासत्त्वादिति उक्तोपमाद्यर्थालंकारसत्त्वे न चित्रकाव्यस्य संभव इति पूर्वाभिधानेनात्रोपमालंकाराभिधानं विरुद्धमिति पूर्वपक्षयति **स्वाधीनेत्यादि** । **भजमाना** आसेवमाना । **लोकोत्तरचमत्कारभूः** अलौकिकचमत्कारविषयः । **प्रतीयमानेन** व्यङ्ग्येन । **वैचित्र्यम्** उत्कर्षाधायकवैलक्षण्यं चमत्कारानुगुण्यं वा । उक्तशङ्कां परिहरन् सिद्धान्तयति **तथापीति** । **न ध्वनि-गुणीभूतेति** । नोत्तमकाव्यमध्यमकाव्यव्यवहार इत्यर्थः । तत्र हेतुमाह **न खल्वित्यादि** । **व्यङ्ग्यसंस्पर्शेति** । व्यङ्ग्यस्य स्वाधीनपतिकेत्याद्युक्तस्य संस्पर्शः संबन्धस्तस्य परामर्शात् अनुसंधानादित्यर्थः । अत्र उपमाद्यलंकारस्थले, अलंकारवति काव्ये इति यावत् । **चारुताप्रतीतिः** उत्कर्षप्रतिपत्तिः । **अपितु** किंतु । **वाच्येति** । वाच्यम् इवादिशब्दवाच्यं यत् वैचित्र्यमुपमावैचित्र्यं तस्य प्रतिभासादेव परामर्शादेव, अनुसंधानादेवेत्यर्थः । इदमत्र सिद्धान्तपर्यवसानम्, अत्र वैचित्र्यान्तरस्यासत्त्वमेवासत्, वाच्यस्यैवोपमावैचित्र्यस्य सत्त्वात्, तच्च श्रुतिमात्रेण प्रतीतं सत् वक्तव्यमर्थं सातिशयमुत्कर्षयत् प्रथमत एवालंकारपदवीमधिकरोति, उक्तव्यङ्ग्यरूपं वैचित्र्यम् अनुसंधानसाधितं भवदपि पश्चात्प्रतीततया, अलंकारवैचित्र्यप्रतीतिव्यवहितप्रतीतिकत्वेनास्फुटतया च सदप्यकिंचित्करमेवेति न ध्वनि-गुणीभूतव्यङ्ग्यव्यवहारप्रयोजकम्, "अव्यङ्ग्यं त्ववरं स्मृतम्"—इत्यत्र ( १३ पृष्ठे ) अव्यङ्ग्यपदं तु स्फुटप्रतीयनव्यङ्ग्यरहितपरम् । एवं चोपमाद्यलंकाराणां वाच्यस्वरूपतया तत्सद्भावे चित्रकाव्यत्वं नासंभवीति न पूर्वाभिधानेनात्रोपमालंकाराभिधानं विरुद्धमिति ॥

**रसादिस्तु व्यङ्ग्योऽर्थोऽलंकारान्तरं च सर्वत्राव्यभिचारीत्यगणयित्वैव तदलंकारा उदाहृताः ।**

---

ननु तथाऽपि पूर्वापरविरुद्धाभिधानद्वयमस्ति, तथाहि, "ते चालंकारनिर्णये निर्णेष्यन्ते"—इत्यनेन, यान्येवालंकारोदाहरणतया उपन्यस्तानि, तान्येव चित्रकाव्यस्योदाहरणतयाऽवगन्तव्यानीत्यभिहित षष्ठोल्लासे ( २९२ पृष्ठे ), अत्र तु यानि 'स्वप्नेऽपि'—इत्यादीनि उपमोदाहरणतयाऽभिहितानि, तान्येतानि चित्रकाव्योदाहरणानि भवितुं नार्हन्ति, एषु राजविषयकभावादिरूपस्य व्यङ्ग्यस्य सत्त्वेनाव्यङ्ग्यत्वलक्षणस्य चित्रकाव्यत्वस्यासंभवादित्येकं पूर्वापरविरुद्धाभिधानम् । तथा, अलंकारद्वयस्य एकत्रोपनिपाते, "सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः । अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः"—इत्यनेन संसृष्टिसंकररूपं स्वतन्त्रमलंकारद्वयं वक्ष्यते, तदनुसारेण स्वप्नेऽपीत्यादौ प्रभावप्रभवेत्याद्यनुप्रासस्यापि सत्त्वेन उपमानुप्रासयोः संसृष्टिसंकरयोरन्यतर एवास्तु अलंकारो न तूपमेति अस्योपमोदाहरणत्वाभिधानमसंगतमित्यपरं पूर्वापरविरुद्धाभिधानमिति पूर्वपक्षमशतोऽङ्गीकृत्य समाधानमाह **रसादिरिति** । 'रसादिरूपस्तु व्यङ्ग्योऽर्थः'—इति क्वचित्सुगमः पाठः । आदिना भावादिपरिग्रहः । **अव्यभिचारि** नियतावस्थितिकम् । इति हेतोः । **अगणयित्वा** (अनावश्यकतया) अनालोच्य, तत्रौदासीन्यमवलम्ब्येति यावत् । **तदलंकाराः** काव्यालंकाराः, यद्वा, तदिति भिन्नं पदम्, अव्यभिचारीति हेतोः तत् अगणयित्वा अलंकाराः उपमादयः उदाहृता इत्यर्थः ।

अयमत्र समाधानाशयः, इहालंकारस्यैव प्रकृततया तस्यैव विवेचनमपेक्षितम्, रसादिरूपस्तु व्यङ्ग्योऽर्थो (ऽन्ततो)ऽलंकारद्वयं च सर्वस्मिन्नेव काव्ये संभवति, तत्र स्वप्नेऽपीत्यादौ राजविषयकभावादेर्यदि स्फुटत्वमङ्गीकरोषि, तदा ध्वनित्वम्, गुणीभूतव्यङ्ग्यत्वं वाऽस्तु, अथास्फुटत्वं चेत्, तदा चित्रत्वमस्तु, ( "अव्यङ्ग्यं त्ववरं स्मृतम्"—इति चित्रकाव्यलक्षणे अव्यङ्ग्यपदस्यास्फुटव्यङ्ग्यपरत्वादिति ) । एतद्विवेचनमत्राप्रकृततया उपेक्ष्य, प्रस्तुताः काव्यालंकारभूताः उपमादयः केवल प्रदर्शिताः, न तु चित्रकाव्यभेदा अपीति । "ते चालंकारनिर्णये निर्णेष्यन्ते"—इत्यनेन तु नैवमभिहितम्, 'यान्येवालंकारोदाहरणानि, तान्येव चित्रकाव्यप्रभेदोदाहरणानि'—इति, किंतु यदेवालंकारनिरूपणम्, तदेव चित्रकाव्यप्रभेदनिरूपणमित्येवोक्तम्, ( अत एव, 'निर्णेष्यन्ते'—इत्युक्तम्, न तु 'उदाहरिष्यन्ते'—इति ), अलंकारप्रभेदे हि निरूपिते चित्रकाव्यप्रभेदनिरूपणाय नापरं किंचिदपेक्षितं स्यात्, तथाहि, अनुप्रासचित्रमुपमाचित्रमित्येवमाद्याश्चित्रकाव्यप्रभेदाः स्वनिरूपणाय केवलमनुप्रासोपमादिनिरूपणमेवापेक्षन्ते, इतरांशस्य विज्ञातत्वात्;

तद्रहितत्वेन तु उदाह्रियमाणा विरसतामावहन्तीति पूर्वापरविरुद्धाभिधानमिति न चोदनीयम् ॥

---

ततश्च स्वप्नेऽपीत्यादौ चित्रकाव्यत्वाभावेऽपि न प्राथमिकं पूर्वापरविरुद्धाभिधानमिति । एवं न द्वितीयमपि, तथाहि, सत्यामेवोपमायां तया सहापरस्य संसृष्टिः संकरो वा संभवतीति शुद्धोपमास्थल इव संसृष्ट्यादिस्थलेऽपि उपमासत्त्वमावश्यकमेव, इयांस्तु विशेषः, चमत्कारितायां यद्यलंकारान्तरस्य उपमया तुल्यकक्षत्वादि, तदा ससृष्टा संकीर्णा वा उपमा भवति, तुल्यकक्षत्वादि नो चेत्, शुद्धैवोपमा भवतीति; एतद्विवेचनं तु अत्राप्रकृततया उपेक्ष्य, प्रकृतत्वात् काव्यालंकारभूता उपमैव केवलं प्रदर्शितेति । ततश्च स्वप्नेऽपीत्यादौ अनुप्रासस्य यद्युपमातुल्यकक्षत्वमङ्गीकरोपि, तदाऽङ्गीक्रियतां नाम संसृष्टा संकीर्णा वा उपमा, अथातुल्यकक्षत्वम्, तदा शुद्धैवोपमेति न पूर्वापरविरुद्धाभिधानमिति । वस्तुतस्तु, अत्रोपमाकृतचमत्कारेण सातिशयेनानुप्रासकृतचमत्कारस्य तिरोधानात् शुद्धोपमैवालंकार इत्यलमधिकेनेति विवरणे स्पष्टम् ॥

ननु चित्रकाव्योदाहरणयोग्यतया रसादिरहितान्येव 'चन्द्रधवलः पटः'—इत्यादीनि उपमोदाहरणानि किमिति नोपन्यस्तानीत्यत आह **तद्रहितत्वेनेति** । रसादिरहितत्वेनेत्यर्थः । **उदाह्रियमाणाः** उदाहरणत्वेन प्रदर्श्यमानाः । **विरसतां** निरास्वाद्यताम् । **आवहन्तीति** । अयं भावः, 'चन्द्रधवलः पटः'—इत्यादिवाक्यस्याकाव्यत्वेन तस्या अप्युपमालंकारत्वाभावः, वाचकवाच्योपस्कारद्वारा रसाद्युपकारकस्यैवालंकारत्वात्, नीरसे हि स्ववैचित्र्येणापाततश्चमत्कारमात्रम्, न त्वलंकारत्वमिति । तदुक्तम्, "रसध्वनिर्न यत्रास्ति तत्र वन्ध्यं विभूषणम् । मृताया मृगशावाक्ष्याः किं फलं हारसंपदा ॥"—इति । उक्तं च, "रसभावादितात्पर्यमाश्रित्य विनिवेशनम् । अलंकृतीनां सर्वासामलंकारत्वसाधकम् । ध्वन्यात्मभूते शृङ्गारविवक्षाविनिवेशतः । उपमादिरलंकारवर्ग एति यथार्थताम् ॥"—इति । अत एव 'गौरिव गवयः'—इत्यत्रोपमायाः, 'नूनं स्थाणुनाऽनेन भाव्यम्'—इत्यत्रोत्प्रेक्षायाः, 'लोष्टः पाषाणः'—इत्यत्र रूपकस्य, 'स्थाणुर्वा पुरुषो वा'—इत्यत्र ससंदेहस्य, 'नेदं रजतम्'—इत्यत्रापह्नुतेः, 'जनो गच्छति, जनेन गम्यते'—इत्यत्र पर्यायोक्तस्य, 'गौरयम्'—इत्यत्रातिशयोक्तेः, 'अद्रिरग्निमान् धूमात्'—इत्यत्रानुमानस्य, "आद्यन्तौ टकितौ"—इत्यत्र यथासंख्यस्य, 'पुत्रेण सहागतः पिता'—इत्यत्र सहोक्तेश्च विद्यमानत्वेऽपि नालंकारत्वम् । **पूर्वापरेति** । पूर्वम् "अव्यङ्ग्यं चित्रम्"—इत्युक्तम्, इदानीं तु सव्यङ्ग्यमुदाहृतमित्येवमादि परस्परविरुद्धाभिधानमित्यर्थः । **न चोदनीयं** न शङ्कनीयम् ॥

तद्वत् धर्मस्य लोपे स्यात्, न श्रौती तद्धिते पुनः ।

धर्मः साधारणः, तद्धिते कल्पबादौ त्वार्थ्येव । तेन पञ्च ।

उदाहरणम्,

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।
करणीयं वचश्चेतः ! सत्यं तस्यामृतं यथा ॥

---

एवं षड्विधां पूर्णां निरूप्य, इदानीमेकोनविंशतिविधा लुप्ता निरूपयन् आदौ पञ्चविधां धर्मलुप्तामाह तद्वदिति । धर्मस्य साधारणधर्मस्य लोपेऽनुपादाने सति तद्वत् पूर्णावत्, वाक्यादिगेत्यर्थः, वाक्ये समासे तद्धिते च श्रौत्यार्थी च स्यादिति भावः । षड्विधत्वं वारयति न श्रौतीति । पुनःशब्दस्त्वर्थे, तद्धिते तु श्रौती नेत्यर्थः, इवार्थविहितवतिरूपे एव हि तद्धिते श्रौती भवेत्, स च वतिप्रत्ययः "तत्र तस्येव" (५।१।११६)–इति पाणिनिसूत्रेण षष्ठीसप्तम्यन्तादेवोपमानपदात् विहिततया साधारणधर्मे एव स्वार्थान्वयबोधं जनयन् नियतमेव साधारणधर्मसाकाङ्क्ष–इति साधारणधर्मोपादानं विना तादृशस्य तद्धितस्यासंभवान्न तत्कृत उपमाभेद इति भावः । ननु चन्द्रत्वमुखत्वादिधर्मप्रतीतर्न धर्मलोप इत्यतो धर्मपदार्थमाह धर्मः साधारण इति । तुल्यार्थवतिर्हि, "तेन तुल्य क्रिया चेद्वतिः" (५।१।११५)–इतिपाणिनिसूत्रेण विहित इति तदर्थस्य साधारणरूपायां तुल्यक्रियायामेव पर्यवसानात् साधारणधर्मोपादान विना नैव तुल्यार्थवतेः सभव इति तद्धितान्तरे दर्शयति कल्पबादाविति । कल्पप्प्रत्ययादावित्यर्थ. आदिशब्देन देश्य-देशीयर्-बहुचो ग्राह्याः । तुशब्दस्तुल्यार्थवतावसंभवबोधनाय । अधिकमुदाहरणे स्फुटीक्रियते । आर्थ्येवेति । न श्रौतीति भावः । पञ्चेति । वाक्यगा समासगेति द्विविधा श्रौती. वाक्य–समास–तद्धित–गेति त्रिविधा आर्थीति मिलित्वा धर्मलोपे लुप्तोपमा पञ्चविधेत्यर्थ. ॥

तत्र, वाक्यगा धर्मलुप्तां श्रौतीमुदाहरति धन्यस्येति । हे चेत अमृतं यथा पीयूषमिव (परिणामसुरसं सतोषजनकं वा) तस्य साधोः वच. वाक्यं सत्यं निश्चयेन करणीय कर्तुं योग्यमित्यर्थः । कीदृशस्य तस्य ? न विद्यते अन्यत् सामान्य सादृश्य यस्य तादृशं यत् सौजन्यं सुजनत्वं तस्योत्कर्षेण आधिक्येन शालते शोभते इति तच्छालो तस्य । अत एव धन्यस्य सर्वोत्कृष्टस्येत्यर्थः । अत्रामृतवचसोरुपमानोपमेययो परिणामसुरसत्वादि साधारणो धर्मोऽतिप्रसिद्धत्वादनुपात्त., करणीयत्वं त्वमृते नान्वितमिति न साधारणम्. यथाशब्देन समासाभावाद्वाक्यमिति वाक्यगा धर्मलुप्ता श्रौती उपमेति बोध्यम् । उक्त च महीधरारैरपि, अत्रामृतवचसोः परिणामसुरसत्वादि साधर्म्यम्. तच्च नोपात्तम्. आक्षेपात् तदस्य संबन्धो यथाशब्देन तद्बोधं विनाऽपर्यातेन श्रुत्यैव बोध्यते इति धर्मलोपे श्रौतीयमिति ॥

आकृष्टकरवालोऽसौ संपराये परिभ्रमन्।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः॥
करवाल इवाचारस्तस्य वागमृतोपमा।
विषकल्पं मनो, वेत्सि यदि जीवसि तत्सखे!॥

---

वाक्यगां धर्मलुप्तामार्थीमुदाहरति आकृष्टेति । आकृष्टकरवालः आकृष्टखड्गः असौ प्रभुः राजा संपराये युद्धे परिभ्रमन् पर्यटन् प्रत्यर्थिसेनया शत्रुसेनया (कर्त्र्या) कृतान्तेन यमेन समः तुल्यः दृष्ट इत्यर्थः। अत्र राजकृतान्तयोरुपमेयोपमानयोः क्रूरत्वं साधारणो धर्मः, स चानुपात्तः (लुप्तः); आकृष्टकरवालत्वं च न साधारणो धर्मः, यमस्य दण्डायुधत्वेनैव प्रसिद्धेः; दृष्टत्वं तु अतीन्द्रिये कृतान्ते बाधान्न साधारणम्; समशब्देन समासाभावाद्वाक्यमिति वाक्यगा धर्मलुप्ताऽऽर्थीयम्। न चात्र कृतान्तेनेति तृतीयादर्शनात् "उपमानोपमेययोः समानविभक्तिकत्वम्"—इति नियमस्य (६०६ पृष्ठे उक्तस्य) भङ्ग इति वाच्यम्, "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" (२।३।७२)—इति पाणिनिसूत्रेण (१) तुल्यार्थकशब्दयोगे षष्ठीतृतीययोर्विशेषतो विधानेन तदतिरिक्तस्थले एव तस्य नियमस्य प्रवृत्तेरिति बोध्यम्॥

समासगां श्रौतीमार्थीं तद्धितगामार्थीं च धर्मलुप्तामुदाहरति करवाल इवेति। हे सखे तस्य प्रकृतस्य (दुष्टस्य) आचारः आचरणं करवाल इव कृपाण इव, घातुक इत्यर्थः। अत्र घातुकत्वं साधारणो धर्मः, स च लुप्तः, इवेन समास इति समासगा श्रौती धर्मलुप्ता। तस्य वाक् वाणी अमृतेनोपमीयते या, यद्वा, अमृतमुपमा (उपमानं) यस्याः सा अमृतोपमा, मधुरेत्यर्थः। अत्र माधुर्यं साधारणो धर्मः, स च लुप्तः, समासे धर्मिवाचकोपमाशब्द इति समासगाऽऽर्थी धर्मलुप्ता। तदुक्तमुद्द्योतेऽपि, उपमाशब्दस्य सदृशमात्रवाचकत्वेऽपि साधारणधर्मसंबन्धे नित्यसाकाङ्क्षत्वाभावाच्छक्तत्वाभावाद्वाऽऽर्थीत्वमिति । तस्य मनः विषादीषन्न्यूनं विषकल्पं विषसदृशम्, नाशकमित्यर्थः। अत्र नाशकत्वं साधारणो धर्मः, स च लुप्तः, "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" (५।३।६७)—इति पाणिनिसूत्रेण विहितस्य कल्पप्प्रत्ययस्य (विषकल्पं मनः—इति सामानाधिकरण्येन निर्देशात्) ईषदसमाप्तिविशिष्टो धर्मी अर्थः, ईषदसमाप्तिश्च किंचिन्न्यूनसकलधर्मसंबन्धरूपा उपमैवेति अत्र उपमायाः (तुल्यादिशब्दवत्) विशेषणतया वाच्यत्वात् तद्धितगाऽऽर्थी धर्मलुप्ता। उक्तं च प्रदीपोद्द्योतयोरपि, ईषदसमाप्तौ विधीयमानस्य कल्पपः

---

१ सूत्रेणेति। तुल्यार्थकैः शब्दैर्योगे तृतीया वा स्यात्, पक्षे षष्ठीति तदर्थः। यथा, तुल्यः सदृशः समो वा कृष्णस्य- कृष्णेन वा। अतुलोपमाभ्यामिति किमर्थमिति चेत्, तुला-उपमा वा कृष्णस्य नास्ति-इत्यत्र तृतीया मा भूदिति॥

**उपमानानुपादाने वाक्यगाऽथ समासगा ॥ ८८ ॥**

**सअलकरणपरवीसामसिरिविअरणं ण सरमकव्वस्स ।**
**दीसइ अह वा णिसम्मइ सरिसं अंसंसमेत्तेण ॥**

---

सादृश्ये पर्यवसानात् विपकल्पमिति तद्धितगाऽऽर्थीति । ननु अध्याहृतं भवतिक्रियारूपसाधारणधर्ममादाय पूर्वोक्ते ( ६१९ पृष्ठे ११ पङ्क्तौ ) 'चन्द्रवन्मुखम्'—इत्यादाविव नाशकमित्यादिकं साधारणधर्ममादाय 'विपवन्मनः'—इत्यादावपि तुल्यार्थवते. संभवात् कल्पवादावेवेति कथमुक्तमिति चेत्, अत्रोच्यते, चन्द्रवन्मुखमित्यादौ अध्याहारं विना वाक्यार्थाभावेन नित्यसाकाङ्क्षतया भवतिक्रिया अध्याहारलभ्या, अध्याहारश्च आकाङ्क्षितैकदेशपूरणम्, अध्याहृता भवतिक्रिया चोपात्तैव न तु लुप्तेति तुल्यार्थवतिप्रत्ययो भवति । 'विपवन्मनः'—इत्यत्र तु विनाऽप्यध्याहार वाक्यार्थसद्भावेन निराकाङ्क्षिततया नाशकमित्यादेरध्याहारलभ्यत्वाभावेनानुपात्तत्वान्नैव तुल्यार्थवते संभव इति । 'विपवन्मन'—इति प्रयोगस्तु भवतिक्रियामध्याहृत्यैव, तदा तु साधारणधर्मः उपात्त एव न तु लुप्त इति बोध्यम् । तदेतत्सर्वं यदि वेत्सि ज्ञास्यमि तत् तर्हि जीवसि जीविष्यसीत्यर्थः । "वर्तमानसामीप्ये वर्तमानवद्वा" (३।३।१३१)—इति सूत्रेण भविष्यति लट् । केचित्तु, यदि जीवसि तदा वेत्सि, तत्समीपावस्थाने तव जीवनमेव दुर्लभमिति भाव इत्याहु.॥ इति धर्मलुप्ताः पञ्च ॥

वाक्य—समास—गामित्वेन द्विविधामुपमानलुप्तामाह उपमानेति । उपमानस्यानुपादाने लोपे सति वाक्यगा समासगा चेति द्विविधैवोपमा भवतीत्यर्थः । उपमानपदादेव उपमाप्रतिपादकस्य वतिप्रभृतितद्धितस्य विधानादुपमानानुपादाने तद्धितस्यासंभवेनात्र न तद्धितगा संभवति, नापि श्रौती, इवादीनामुपमानान्वितनयैव स्वार्थबोधकत्वनियमेन उपमानानुपादाने तेषामप्युपादानासंभवात्, अतो वाक्यसमासयोरेव. तयोरप्यार्थ्येवेति द्विविधैवोपमानलुप्ता उपमेति भावः ।

तत्र वाक्यगामुपमानलुप्ताम् ( आर्थीम् ) उदाहरति सअलेति । "सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य । दृश्यतेऽथ वा निशम्यते सदृशमंशांशमात्रेण ॥"—इति संस्कृतम् । सरसकाव्यस्य अंशांशमात्रेण लेशतोऽपि, अपिरत्र गम्य., किंचिदंशेनापीति यावत्, सदृशं तुल्यं न दृश्यते, अथवा न निशम्यते न श्रूयते इत्यन्वयः । कीदृशमित्याकाङ्क्षायामाह सकलेति । सकलकरणानां सर्वेन्द्रियाणां यः परः परमो विश्रामो विश्रान्तिः विपयान्तरवैमुख्यमिति यावत्. तज्जन्या या श्रीः संपत्तिः तद्वितरणं तद्दात्रित्यर्थः । मुखविपुला आर्या । लक्षणमुक्तं प्राक् ( १२४ पृष्ठे ) ।

**कव्वस्सेत्यत्र कव्वसममिति, सरिसमित्यत्र च णूणमिति पाठे एपैव समासगा॥**

---

अत्र सदृशपदेन सामान्यतः उपमानोक्तावपि विशेषतः ( उपमानतावच्छेदकामृतत्वादिरूपेण ) उपमानं नोपात्तमित्युपमानलुप्तेयम् । महेश्वरभट्टाचार्यास्तु, उपमानवाचकात् यत्पदादनन्तरम् इवादेः संभवस्तदनुपादानमेवोपमानानुपादानम्, तेनात्र सदृशपदेन सामान्यतः उपमानोक्तावपि न क्षतिः, सदृशशब्दादिवाद्यप्रयोगादित्याहुः । ननु उपमानानुपादाने सादृश्यप्रतीतिः कथमिति चेत्, उच्यते, अत्रास्मद्दर्शनश्रवणाविषयत्वेन दुर्लभतया उत्कृष्टगुणम् अस्मदगोचरं किंचिदुपमानं भविष्यतीति सादृश्यपर्यवसानादुपमानलुप्तेयमुपमेत्युद्द्योते स्पष्टम् । तथा चात्र वर्णनीयतया काव्यमुपमेयम्, सकलेत्यादिकं साधारणो धर्मः, सदृशपदेन सह काव्यशब्दस्य समासो न कृत इति वाक्यगा उपमानलुप्ता आर्थी उपमेति बोध्यम् । व्याख्यातमिदं प्रदीपोद्द्योतप्रभासु च, तथाहि,—"अत्र विशेपतः उपमानं नोपात्तम् । चिन्त्यमेतत् "—इति प्रदीपः । **चिन्त्यमेतदिति** । तद्बीजं तु काव्यमेवात्रोपमानम्, 'चन्द्रस्य सदृशं मुखम्'—इत्यादौ चन्द्रस्यैवोपमानतावगमात्; एवं चोपमेयलोप इति वक्तुमुचितमिति । उद्धारस्तु 'काव्यस्य समम्'—इत्यस्य काव्यनिष्ठसादृश्यप्रतियोगीत्यर्थः, काव्यस्य वर्णनीयतयोत्कर्षायोपमेयत्वस्य विवक्षितत्वादितीत्युद्द्योतः । **चिन्त्यमिति** । विचार्यमित्यर्थः । अयमाशयः, अत्र हि 'न दृश्यते, न वा श्रूयते'—इत्युपमानासंभवकथनात्सादृश्यरूपायाः उपमायाः असंभवात् असमालंकारोऽयमुपमातिरिक्त एवेत्यलंकाररत्नाकरादावुक्तमिति उपमाभेदोदाहरणत्वमयुक्तमिति; विचार्यमाणे तूपमैवेयम्, अस्मद्दर्शनाद्यगोचरत्वेऽपि उत्कृष्टं किंचिदुपमानं भविष्यतीत्युपमायामेव पर्यवसानात्, अतो नालंकारान्तरमितीति प्रभा । सुधासागरकारास्तु, अत्र ब्रह्मज्ञानस्योपमानत्वसंभवेऽपि असंभवविवक्षयोपमानानुपादानमिति बोध्यम् । अत्रोपमा व्यतिरेकस्याङ्गमिति कैश्चिदुक्तम्, तन्न, अश्रुतादृष्टत्वेनोपमानासंभवविवक्षायां ततः आधिक्यस्यासंभवादित्याहुः ॥

अस्यामेवार्यायां 'कव्वसमम्'—इति पाठे समासगा उपमानलुप्ता उपमा संभवतीत्याह **कव्वस्सेत्यत्रेति**। **कव्वसममिति** । "काव्यसमम्"—इति संस्कृतम्। काव्यस्य काव्येन वा सममिति विग्रहः । कव्वसममिति पाठे समशब्दस्य 'सरिसम्'—इत्यनेन पौनरुक्त्यं स्यादत आह **सरिसमित्यत्र चेति** । **णूणमिति** । "नूनम्"—इति संस्कृतम्। निश्चयेनेत्यर्थः । **इति पाठे इति** । एवं पाठे पौनरुक्त्यं नेति भावः । **एपैव** इयमेव । **समासगेति** । उपमानलुप्तेति भावः । भास्करादयस्तु, अत्रैव 'कव्वंव' ( काव्यमिव )—इति पाठे यद्यपि श्रौत्यपि संभवति, तथाऽपि प्रचुरतरप्रयोगाभावेन प्राचीनैरनादृतत्वात्सा नोक्तेत्याहुः, तन्न,

**वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि।**
**कर्मकर्त्रोर्णमुलि,**

वाशब्दः उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट्,—समासेन, कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा, कर्तुः क्यङा, कर्मकर्त्रोरुपपदयोर्णमुला च भवेत्।

---

इवादेरुपमानपरत्वनियमेन तदनुपादाने तदसंभवस्योक्तत्वादिति सुधासागरादौ स्पष्टम्॥ इत्युपमानलुप्ते द्वे॥

षड्विधां वादिलुप्तामाह **वादेरिति**। आदिना इवादयस्तुल्यसदृशादयश्च ग्राह्याः। वादेः उपमाप्रतिपादकस्य लोपे अनुपादाने सति सा उपमा समासे, कर्मक्यचि, आधारक्यचि, क्यङि, कर्मण्युपपदे सति णमुलि, कर्तर्युपपदे सति णमुलि च भवतीति सूत्रार्थः। वादिलोपे उपमा वाक्यगा न संभवति, 'मुखं चन्द्रश्च काशते'—इत्येतावन्मात्रेणोपमाया अप्रतीतेः, नापि तद्धितगा श्रौती वा संभवति, वत्यादीनां तद्धितानाम्, इवादीनां च औपम्यप्रतिपादकतया तत्प्रयोगे औपम्यप्रतिपादकलोपासंभवात्, अतो सादृश्यबोधकवादिलोपे उपमा समासादिगामित्वेन षड्विधैवेति भावः। अधिकं तु 'असितभुजग॰'—इत्युदाहरणव्याख्यानावसरे प्रतिपादयिष्यामः। **कर्मकर्त्रोर्णमुलीति**। "कर्मकर्त्रोर्णमुल्येतद्द्विलोपे क्विप्समासगा"—इति संधिसत्त्वान्नात्र छन्दोभङ्गशङ्का कार्या। सूत्रं व्याचष्टे **वाशब्द इत्यादि**। **उपमाद्योतक इति**। "उपमायां विकल्पे वा"—इत्यमरात्, "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये"—इति विश्वकोशाच्चेति भावः। **उपमाप्रतिपादकस्य** सादृश्यबोधकस्य। **षडिति**। भेदाः भवन्तीति शेषः। षड्विधत्वमेवोपपादयति **समासेनेत्यादि**। ननु समास-क्यच्-क्यङ्-णमुल इति चतुर्भिरुपाधिभिश्चतुर्विधत्वमेव, कथं षड्विधत्वमित्यत आह **कर्मण इत्यादि**। क्यचि द्विधा, कर्मणोऽधिकरणाच्च विधानेन तस्य द्वैविध्यात्; क्यङि त्वेकैव, कर्तुरेव तद्विधानात्; णमुल्यपि द्विधा, कर्मणि कर्तरि चोपपदे तद्विधानात्; एवंच षड्विधत्वमुपपन्नमिति भाव.। यद्यपि क्यच्-क्यङ्-णमुलां प्रत्ययानां प्रयोगे उपमा प्रतीयते, तथाऽपि चैषां यथा नोपमावाचकत्वं तथोदाहरणव्याख्यानावसरे एव प्रतिपादयिष्यामः। षण्णां मध्ये या समासगा सा द्विपदसमासगा (१) बहुपदसमासगा चेति द्विविधेति बोध्यमिति प्रदीपादौ स्पष्टम्।

---

१ द्वे पदे यस्मिन् समासे इति बहुव्रीहिः। एवं बहुपदसमासेत्यत्रापि॥

उदाहरणम्,—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥

तथा,

असितभुजगभीषणासिपत्रो रुहरुहिकाहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत् ॥

---

तत्र द्विपदसमासगां वादिलुप्तामुदाहरति तत इति । महाभारते द्रोणपर्वणि (१८४ अध्याये) रात्रियुद्धे चन्द्रोदयवर्णनमिदम् । ततः तदनन्तरं कुमुदानां कुमुदपुष्पाणां नाथेन स्वामिना, कुमुदनाथत्वं तद्विकाशित्वात्; कामिनी कामयमाना स्त्री, विरहिणीति यावत्, तस्याः गण्डः कपोलः स इव पाण्डुः पाण्डुवर्णस्तादृशेन, नेत्रयोरानन्देन तज्जनकेन चन्द्रेण (कर्त्रा) महेन्द्रस्येयं माहेन्द्री प्राची दिक् अलंकृतेत्यर्थः । चन्द्रोदयो जात इति भावः । अत्र 'कामिनीगण्ड इव पाण्डुः'—इति विग्रहे "उपमानानि सामान्यवचनैः"—(२।१।५५)—इति पाणिनिसूत्रेण (१) उपमानसाधारणधर्मवाचकयोर्द्वयोः पदयोः समासे, समासेन साम्यप्रतिपत्तौ इवाद्यप्रयोग इति द्विपदसमासगा वादिलुप्तेयमुपमा ॥

बहुपदसमासगां वादिलुप्तामुदाहरति असितेति । अयं वीरः प्रतिभटानां प्रतियोद्धृणां विक्रमस्य पराक्रमस्य दर्शने अवलोकने सति, असितभुजगः कृष्णसर्पः तद्वत् भीषणः (तीक्ष्णधारत्वात्) भयंकरः असिः खड्ग एव पत्रं (तदाकारत्वात्) यस्य तादृशः; रुहरुहिका रभसोत्कण्ठा तया आहितं व्याप्तं यत् चित्तं तेन तूर्णः त्वरितः चारः संचारो (गमनं) यस्य तादृशः; चित्रतूर्णेति पाठे रुहरुहिकया आहितः चित्रः आश्चर्यभूतः तूर्णः चारो यस्य तादृश इत्यर्थः । पुलकिता (शौर्येणानन्दोदयात्) रोमाञ्चिता तनुः शरीरं यस्य सः; अत एव, उद्गता उल्लसिता कपोलयोः कान्तिः शोभा यस्य तादृश आसीदित्यर्थः । पुष्पिताग्रा छन्दः । लक्षणमुक्तं प्राक् (९७ पृष्ठे) ।

अत्रासितभुजगः उपमानम्, भीषणत्वं साधारणो धर्मः, असिपत्रमुपमेयम्; असितभुजगेत्यादावुपमान-साधारणधर्म-उपमेयपदानां त्रयाणामपि समास इति बहुपदसमासगा वादिलुप्तेयम् । तथा च पूर्वोदाहरणे द्विपदसमासगा, अत्र तु बहुपदसमासगेति उदाहरणयोर्भेदः । यत्तु, पूर्वोदाहरणे "उपमानानि सामान्यवचनैः"—इति समासात् श्रौती, अत्र

---

१ पाणिनिसूत्रेणेति । उपमानबोधकानि सुबन्तानि सामान्यवचनैः साधारणधर्मवाचकैः सुबन्तैः सह समस्यन्ते इति तदर्थः । यथा, घन इव श्यामः घनश्याम इति ॥

**पौरं सुतीयति जनं, समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचुञ्चुः।**
**नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना॥**

---

त्वसितभुजगवद्भीषण इति मध्यमपदलोपिसमासादार्थीति भेदमाहुः, तन्न, विनिगमनाविरहात् (१) इत्युद्द्योते स्पष्टम्। उक्तं च सुधासागरकारैरपि,—यत्तु मधुमतीकारादिभिर्व्याख्यातम्, असितभुजगतुल्यभीषणोऽसिरिति समासे शाकपार्थिवादित्वात्तुल्यशब्दलोपात्समासगाऽऽर्थी; पूर्वत्र श्रौतीत्वप्रयोजकयथाशब्दादिलोपः, द्वितीये त्वार्थीत्वप्रयोजकतुल्यादिशब्दलोप इत्युदाहरणयोर्भेद इति। तत्प्रामादिकम्, उभयत्रोपमानधर्मयोः समासस्य तुल्यत्वेन शाकपार्थिवादित्वकल्पनस्यान्याय्यत्वात्। अपि च, द्योतकमादायैव श्रौतार्थविभागस्तस्य च लोपे क्व श्रौतीत्वसंभवः, आर्थी त्वर्थापत्तिगम्यत्वेन सिद्धैव। किं च, न खलु समासे तुल्यादिरिवादिर्वा लुप्यते, किं तु समासेनैवोपमाभिधानात् "उक्तार्थानामप्रयोगः"—इति न्यायेन द्योतकं न प्रयुज्यते इति लोपव्यवहारः, तत्रेवादेस्तुल्यादेर्वा विनिगन्तुमशक्यत्वात्। अपि च, द्योतकलोपेऽपि श्रौतीत्वाङ्गीकारे भेदाधिक्यं स्यात्, तथा च 'ऊनविंशतिर्लुप्ताभेदाः'—इति (वक्ष्यमाणा) श्रीवाग्देवतावतारोक्तिः (मम्मटोक्तिः) विरुध्येतेति विद्वद्भिर्विभाव्यमिति॥

कर्माधिकरणयोः क्यचि, क्यङि च वादिलुप्तामुदाहरति पौरमिति। असौ राजा पुरे भवं पौरं नागरं जनं सुतमिवाचरति सुतीयति पुत्रवत्पालयतीत्यर्थः। अत्र "उपमानादाचारे" (३।१।१०)—इति पाणिनिसूत्रेण (२) उपमानवाचकात् सुतमिति कर्मपदात् आचारेऽर्थे क्यच्प्रत्ययः। जनमित्युपमेये द्वितीयादर्शनादत्र द्वितीयान्तादेव क्यच्, न तु सप्तम्यन्तादिति बोध्यम्। आचारोऽत्र स्नेहपालनादिरूपः। स एवात्र साधारणो धर्मः। क्यचः आचारः सामान्योऽर्थः, विशेषाचारस्तु तत्तत्पदसान्निध्यात्प्रतीयते। उपमानादित्यनेन इवार्थस्य वृत्तौ प्रवेशः सूचितः। एवं क्यङ्क्विपोर्विषयेऽप्यूह्यम्। एवं चोपमानभूतसुतकर्मकाचाराभिन्नः पौरजनकर्मकाचार इति बोधः। तथात्र क्यचः उपमावाचकत्वाभावेनात्रोपमाप्रतिपादकस्य लोपः (अनुपादानम्) इति कर्मक्यचि वादिलुप्तेयम्।

विचित्रेण चरित्रेण वित्तः (प्रसिद्धः) विचित्रचरित्रचुञ्चुः, "तेन वित्तश्चुञ्चुप्चण-

---

१ एकतरपक्षपातिनी युक्तिर्विनिगमना तस्याः विरहात् अभावात्॥ २ सूत्रेणेति। अत्र "धातोः कर्मणः समानकर्तृकादिच्छायां वा" (३।१।७)—इति सूत्रात् 'कर्मणः'—इति, "सुप आत्मनः क्यच्"—इति सूत्रात् सुप इति, क्यजिति चानुवर्तते। उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यादिति सूत्रार्थः। यथा, पुत्रमिवाचरति पुत्रीयति छात्रम्। यथा वा, विष्णुमिवाचरति विष्णूयति द्विजम्॥

चक्री चक्रारपङ्क्तिं, हरिरपि च हरीन्, धूर्जटिर्धूर्ध्वजाग्रान्,
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः, कूवराग्रं कुवेरः ।
रंहः संघः सुराणां, जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिः अनुप्रासानुरोधेनैव कृता, न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ॥

भण तरुणि ! रमणमन्दिरमानन्दस्यन्दिसुरेन्दुमुखि ! ।
यदि सल्लीलोल्लापिनि गच्छसि तत् किं त्वदीयं मे ॥

---

भावः । न व्यतिक्रामन्ति नातिवर्तन्ते, किंतु तत्रैवान्तर्भूता भवन्तीत्यर्थः । तत्स्वभावत्वादिति । तत्तल्लक्षणाक्रान्तत्वादित्यर्थः ॥

तत्र प्रसिद्ध्यभावस्य प्रसिद्धिविरुद्धतायामन्तर्भावे उदाहरति चक्रीति । मयूरकविकृते सूर्यशतके सूर्यरथवर्णनमिदम् । अहिमरुचेः सूर्यस्य सः स्यन्दनः रथः वः युष्मान् अवतात् रक्षतु—इत्यन्वयः । स कः ? —जगदुपकृतये लोकोपकाराय नित्ययुक्तस्य निरन्तरप्रवृत्तस्य, सदा सज्जितस्य वा यस्य ( रथस्य ) चक्रारपङ्क्तिं चक्रकीलकपङ्क्तिं चक्री विष्णुः, हरीन् अश्वान् हरिः इन्द्रः, धूर्यानमुखं तत्रत्यध्वजानां पताकानाम् अग्रान् अग्रभागान् धूर्जटिः शिवः, अक्षं चक्रं, चक्रनाभिप्रोतं लोहदण्डं वा नक्षत्रनाथः चन्द्रः, अरुणं सारथिं वरुणः पाशी, कूवराग्रं युगंधराग्रं कुवेरः, रंहः वेगं सुराणां संघः देवसमूहः 'अन्वहं प्रतिदिनं प्रीतिप्रसन्नः सन् स्तौति'—इति सर्वान्वयि । प्रातः प्रसन्न इति पाठे प्रभातसमये प्रसन्नः सन्नित्यर्थः । 'धूर्ध्वजान्तान्'—इति क्वचित्पाठः । "धूः स्त्री क्लीबे यानमुखम्"—इत्यमरः । स्रग्धरा छन्दः । लक्षणमुक्तं प्राक् ( ११२ पृष्ठे ) ।

अत्र चक्रिप्रभृतीनां कर्तॄणां चक्रारपङ्क्त्यादीनां कर्मणां प्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव निबद्धा, न पुनरितिहासादिषु तथा प्रसिद्धेति प्रसिद्ध्यभावः, सोऽयं प्रसिद्धिविरोध एव । तदेवाह अत्रेत्यादि । कर्तृकर्मप्रतिनियमेन चक्री चक्रारपङ्क्तिं स्तौतीति रीत्या ॥

वैफल्यस्यापुष्टार्थतायामन्तर्भावे उदाहरति भणेति । भर्तृगृहगमनाय कृतावधारणां प्रति उपनायकस्योक्तिरियम् । युग्ममिदम्, "द्वाभ्यां युग्ममिति प्रोक्तं, त्रिभिः श्लोकैर्विशेषकम् । कलापकं चतुर्भिः स्यात्, तदूर्ध्वं कुलकं स्मृतम् ॥"—इति लक्षणात् । हे, आनन्दस्यन्दी सुन्दरश्च यः इन्दुः शारदपूर्णिमाचन्द्रस्तद्वत् ( प्रकाशमानं ) मुखं यस्यास्तादृशि, सतीभिरुत्कृष्टाभिर्लीलाभिरुल्लपितुं वदितुं शीलं यस्यास्तथाभूते, अरुणौ सालक्तकौ चरणौ यस्यास्तथाभूते, हे तरुणि त्वं यदि रमणमन्दिरं भर्तृगृहं गच्छसि, तत् तदा त्व-

अनणुरणन्मणिमेखलम् अविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे ! रणरणकम् अकारणं कुरुते ॥

अत्र, वाच्यस्य विचिन्त्यमानं न किंचिदपि चारुत्वं प्रतीयते इत्यपुष्टार्थत्वानुप्रासस्य वैफल्यम् ।

अकुण्ठोत्कण्ठयेति । अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यते इति परुषानुप्रासोऽत्र प्रतिकूलवर्णतेत्र वृत्तिविरोधः ।

---

दीय परिसरणं गमनं मे मम अकारणं निमित्तं विना रणरणकम् उत्कण्ठां किं कुत. कुरुते, ( तत् ) भण वदेत्यन्वयः । कीदृशं परिसरणम् ?—अनणु बहुतरं रणन्तः शब्दायमानाः मणयो यस्यां तादृशी मेखला काञ्ची यत्र तथाभूतम्, यद्वा, अनणु अनल्पं रणन्ती मणिमेखला यत्र तथाभूतम् । 'अननुरणत्'—इति पाठे शब्दरहितमणिमेखलमित्यर्थः, तत्स्थानस्य गुरुत्वेन लघुसंचारादिति भावः । अविरतं संततं शिञ्जानं शब्दायमानं मञ्जु सुन्दरं मञ्जीरं नूपुरं यत्र तादृशं चेत्यर्थः । केचित्तु, रमणमन्दिरं क्रीडागृहम् । अत्र संबोधनविशेषणैर्नायिकायाः स्वाधीनपतिकात्वं निःशङ्कत्वं च व्यज्यते इत्याहुः । आर्या छन्दः ।

अत्र, वैफल्यस्यापुष्टार्थतायामन्तर्भावं दर्शयति अत्र वाच्यस्येत्यादि । अत्र, अनणुरणन्मणिमेखलमिति, अविरतशिञ्जानमञ्जुमञ्जीरमिति च परिसरणविशेषणद्वयं 'त्वदीयं परिसरणमकारणं वृथा रणरणकं कुरुते'—इति वाच्यार्थस्य, तेन व्यङ्ग्यस्य भाविविरहस्य च न किंचिदुपकारे वर्तते, केवलमनुप्रासार्थमेव तदुपात्तमिति अपुष्टार्थत्वमेवानुप्रासस्य वैफल्यमुच्यते इति भावः । तदुक्तमुद्द्योते,—शब्दानुरूपार्थविरहेणानुप्रासमत्त्वेऽपि नास्वादोत्कर्षः, शब्दालंकाराणामपि अर्थातिशयाधानद्वारेणैव चमत्कारित्वात्, शब्दाना परिवृत्त्यसहत्वमात्रेण शब्दालंकारव्यपदेश इति । उक्तंच चक्रवर्त्यादिभिरपि.—अत्र वाच्यस्येत्यादि । क्रीडागृहं यदि गच्छसि तदा किमिति तव गमनं वृथा रणरणकं कुरुते इति वाक्यार्थे वैचित्र्याभावस्यानुभाविकत्वेन केवलं शब्दमात्रपर्याप्तोऽनुप्रास इत्यर्थापरिपोषादपुष्टार्थतेत्यर्थः । तथाच शब्दालंकारत्वेऽपि अनुप्रासादीनामर्थोपकारकत्वेनावश्यं भवितव्यमिति भावः । नहि शब्दालंकाराणां सर्वथाऽर्थमपुरस्कृत्यैव रसोपकारकत्वम्, परम्परासंबन्धेन शब्दवदर्थस्यापि घटकत्वात् । परंतु शब्दान्वयव्यतिरेकानुविधायित्वात् "प्राधान्येन व्यपदेशाः"—इति न्यायात्तदीयत्वेन व्यपदेश इति, न तु सर्वथाऽर्थानपेक्षता । तदुक्तं "यत्सोऽर्थान्तरयुक्तया"—( ६६ पृष्ठे )—इति । एवंचार्थोपकारकत्वरूपद्वारबाधात् प्रकृतानुप्रासस्य चमत्कारानुपयोगित्वमेवेत्याशय इति ॥

वृत्तिविरोधस्य प्रतिकूलवर्णतायामन्तर्भावे उदाहरति अकुण्ठेति । इदं पद्यं सप्तमोल्लासे ( २६८ पृष्ठे ) उदाहृतम्, तत्रैव व्याख्यातं च । आडम्बरः समारम्भः । " आ-

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः । यथा,—

भुजंगमस्येव मणिः सदम्भाः, ग्राहावकीर्णेव नदी सदम्भाः ।
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रसभं सदम्भाः ॥

उपमायाम्, उपमानस्य जाति-प्रमाणगतं न्यूनत्वम्, अधिकता वा तादृशी अनुचितार्थत्वं दोषः; धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरतः । क्रमेणोदाहरणम्,—

---

डम्बरः समारम्भे फेरुगर्जितसूर्ययोः"—इति विश्वः । परुषवर्णनिष्पाद्यश्चित्तक्षोभ इति केचित् । **पूर्वोक्तरीत्या** अष्टमोल्लासे गुणविवेचनप्रस्तावोक्तरीत्या । **वृत्तिविरोध** इति । शृङ्गारे हि उपनागरिका वृत्तिरुचिता, तां विहाय परुषाया अङ्गीकारात् यो माधुर्यव्यञ्जकवृत्तिविरोधोऽनुप्रासदोषः स प्रतिकूलवर्णतैवेति भावः ॥

"यमकं तु विधातव्यं न कदाचिदपि त्रिपात्"—इति निषेधात् यमकस्य पादत्रयगतत्वेन यमनं दोषः, स चाप्रयुक्तेऽन्तर्भवति, कविभिस्तथाऽप्रयोगादित्याह **यमकस्येति** । **यमनं** निबन्धनम् । **अप्रयुक्तत्वमिति** । एकस्मिन् द्वयोश्चतुर्षु वा पादेषु यमकं कविप्रयोगे दृष्टम्, न तु पादत्रये, अतः पादत्रये यमकम् अप्रयुक्तत्वदोष एवेत्यर्थः ।

तदुदाहरति **भुजंगमस्येति** । सदम्भाः दम्भः कपटं तत्सहिताः, खला इत्यर्थः, दुष्टाभिसंधानयुक्ता इति यावत् । "कपटोऽस्त्री व्याजदम्भौ"—इत्यमरः । दुरन्ततां दुःखग्राह्यान्तःकरणताम्, यद्वा, स्वीयां परिणामदुष्टतां निर्णयतोऽपि निश्चिन्वतोऽपि जन्तोः प्राणिनः चेतः चित्तं प्रसभं बलात्कारेण 'प्रमुखे'—इति पाठे आपाततः कर्षन्तीत्यन्वयः । क इव ?—सदम्भाः सत् विद्यमानम् उत्कृष्टं वा अम्भः तेजः ( कान्तिः ) यत्र तादृशो भुजंगमस्य सर्पस्य मणिरिव । तेजसोऽप्यम्भःपदवाच्यत्वमस्ति, अत एव शस्त्र-स्फटिक-मौक्तिकादौ 'सपानीयमिदम्'—इति व्यवहारः परीक्षकाणाम् । तथा, ग्राहैर्नक्रैः अवकीर्णा व्याप्ता, सदम्भाः सत् समीचीनं ( स्वच्छतरं ) अम्भः उदकं यस्यास्तथाभूता नदीवेत्यर्थः । उपजातिश्छन्दः । लक्षणमुक्तं प्राक् ( ७९ पृष्ठे ) ॥

अर्थालंकारदोषेषु उपमादोषाणामुक्तेष्वन्तर्भावमाह **उपमायामिति** । **जातिप्रमाणेति** । जातिर्ब्राह्मणत्वादिः, प्रमाणं परिमाणं तद्गतेत्यर्थः । **तादृशी** जातिप्रमाणगता । **अनुचितार्थत्वमिति** । अनुचितार्थत्वमेवेत्यर्थः । साधारणधर्मगतावपि दोषावुक्तदोषयोरन्तर्भवत इत्याह **धर्माश्रये त्विति** । तुशब्दः समुच्चयार्थकः, व्यवहितो योज्यः । धर्मः साधारणो धर्मः आश्रयो ययोस्ते इति विग्रहः । तथा च साधारणधर्मगते न्यूनाधिकत्वे अपीत्यर्थः, उपमानस्य न्यूनधर्मत्वम् अधिकधर्मत्वं चेति फलितोऽर्थः । **यथाक्रमं**

चण्डालैरिव युष्माभिः साहसं परमं कृतम्।
वह्निस्फुलिङ्ग इव भानुरयं चकास्ति।
अयं पद्मासनासीनश्चक्रवाको विराजते।
युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः॥
पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः॥

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता॥

---

क्रमेण। हीनेति। हीनपदत्वं न्यूनपदत्वम् अधिकपदत्वं च दोषं न व्यभिचरतः नातिवर्तेते, किंतु तत्रैवान्तर्भवत इत्यर्थः॥

तत्र जातिगतन्यूनत्वस्यानुचितार्थतायामन्तर्भावे उदाहरति चण्डालैरिति। अत्र चण्डालत्वजातेर्न्यूनतया दुष्कर्मकारित्वव्यक्तेरनुचितार्थत्वम्। तद्व्यक्तिविवक्षायां तु न दोषत्वमिति बोध्यमिति प्रदीपोद्द्योतयोः। इदमवधेयम्, यदा साहसिकमात्रोपमानविवक्षया चण्डालादिपदमुपादीयते, तदैवेदमुदाहरणम्, न तु दुष्कर्मकारित्वविवक्षायामपीति सुधासागरे स्पष्टम्। सोमेश्वरेण तु, अत्र वाच्यं साहसकारित्वमिवास्पृश्यत्वाद्यपि व्यङ्ग्यमिति जातिगतं न्यूनत्वमित्युक्तम्॥

प्रमाणगतन्यूनत्वस्यानुचितार्थतायामन्तर्भावे उदाहरति वह्नीति। अत्र भगवतः महत्त्वधाम्नो ज्वलनस्फुलिङ्गलक्षणमुपमानं परिमाणतो न्यूनम्॥

जातिगताधिकताया अनुचितार्थतायामन्तर्भावे उदाहरति अयमिति। अयं चक्रवाकः पक्षिविशेषः पद्ममेव आसनं तत्र आसीनः उपविष्टः युगादौ प्रजाः विनिर्मित्सुः निर्मातुमिच्छुः भगवान् वेधाः ब्रह्मेव विराजते शोभते इत्यर्थः। अत्र ब्रह्मत्वजात्या उपमानमधिकम्। ब्रह्मणः कल्पभेदेन भेदात् ब्रह्मत्व जातिरिति प्रदीपादौ स्पष्टम्॥

प्रमाणगताधिकताया अनुचितार्थतायामन्तर्भावे उदाहरति पातालमिति। कालिन्दीपातसन्निभः यमुनाप्रवाहतुल्यः। अत्र परिमाणतः उपमानमधिकम्।

एषूदाहरणेषु चण्डालादिभिरुपमानैरुपमेयभूता अर्था अत्यन्तमेव कदर्थिताः, निन्दोपहासादिप्रतीतेः,—इत्यनुचितार्थता। तदेवाह अत्रेत्यादि। प्रस्तुतः उपमेयरूपः। कदर्थितः तिरस्कृतः। अनुचितार्थतेति। यद्यपि चण्डालादेर्न्यूनत्वेनोपमेयस्य तिरस्कारोऽपि ब्रह्मादिभिरुपमानैर्न तथा, तथाऽप्यत्युत्कृष्टब्रह्माद्युपमानकत्वम् अपकृष्टोपमेयस्यासत्यतापर्यवसायितयोपहासाय भवतीति बोध्यमिति उद्द्योतसारबोधिन्यादिषु स्पष्टम्। एवं च पूर्वोदाहरणद्वये निन्दाप्रतीतेः, उत्तरोदाहरणद्वये उपहासप्रतीतेरनुचितार्थत्वमिति फलितम्॥

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम् ।

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते—इत्यधिकपदत्वम् ॥

लिङ्गवचनभेदोऽपि उपमानोपमेययोः साधारणं चेत् धर्ममन्यरूपं कुर्यात्, तदा एकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं

---

धर्माश्रितस्य न्यूनत्वस्य हीनपदतायामन्तर्भावे उदाहरति **स मुनिरिति** । मौञ्ज्या मुञ्जाख्यतृणनिर्मितमेखलया लाञ्छितः चिह्नितः कृष्णाजिनरूपं पटं वस्त्रं वहन् सः मुनिः नारदः नीलेन जीमूतभागेन मेघखण्डेन आश्लिष्टः संबद्धः अंशुमान् सूर्य इव व्यराजदित्यर्थः ।

अत्रोपमेयमौञ्जीस्थानीयस्तडिल्लक्षण उपमानस्य धर्मो न केनापि पदेन प्रतिपादितः, न चाक्षेपादिनापि स्पष्टं प्रतीयते, अविनाभावाद्यभावात् (१)—इति न्यूनपदत्वमेवैतत्—इति प्रदीपे स्पष्टम् । तदेवाह **अत्रेत्यादि** । उपमानस्य अंशुमतः । अस्य 'धर्मः'—इत्यनेनान्वयः । **हीनपदत्वमिति** । न्यूनपदत्वमेवैतादित्यर्थः ॥

धर्माश्रितस्याधिकत्वस्याधिकपदतायामन्तर्भावे उदाहरति **स पीतेति** । पीतं पीतवर्णं वासो वस्त्रं यस्य तादृशः; प्रगृहीतं शार्ङ्गं शृङ्गविकाररूपं धनुर्येन तथाभूतः सः श्रीकृष्णः मनोज्ञं सुन्दरं च तत् भीमं भयंकरं च वपुः शरीरम् आप प्राप । क इव?—शतह्रदा विद्युत् इन्द्रायुधं शक्रधनुश्च तद्वान्, निशायां रात्रौ शशिना चन्द्रेण संसृज्यमानः संबध्यमानः मेघ इवेत्यर्थः । उपजातिश्छन्दः । लक्षणमुक्तं प्राक् (७९ पृष्ठे) ।

अत्रोपमेये श्रीकृष्णे शङ्खाद्यनिर्देशात् उपमाने मेघे शङ्खतुल्यस्य शशिनो ग्रहणमतिरिक्तमिति धर्माधिक्यं दोषः, सोऽयमधिकपदत्वमेव । तदेवाह **अत्रेत्यादि** । उपमेयस्य श्रीकृष्णस्य । **अधिकपदत्वमिति** । अधिकपदत्वमेवैतादित्यर्थः । उपमानन्यूनाधिकधर्मत्वमेवोपमेयाधिक्न्यूनधर्मत्वमिति पृथक् नोक्तमित्युद्द्योते स्पष्टम् ॥

उपमायां भिन्नलिङ्गं भिन्नवचनं चेति दोषद्वयं प्राचीनैरुक्तम्, तदपि भग्नप्रक्रमतायामन्तर्भवतीत्याह **लिङ्गवचनभेदोऽपीति** । उपमानोपमेययोर्लिङ्गवचनभेदोऽपि साधारणं धर्मम् उपमाने उपमेये च संगतं धर्मम् अन्यरूपम् असाधारणरूपम् (उपमानरूपम् उपमेयरूपं वा) कुर्याच्चेदित्यन्वयः । **एकतरस्यैवेति** । उपमानस्यैव, उपमेयस्यैव वेत्यर्थः,

---

१ अविनेति । व्याप्त्यभावादित्यर्थः । तं विना च सादृश्याप्रतीतेर्दोषत्वमित्युद्द्योत ॥

वा प्रतीयमानेन धर्मेण प्रतीयते इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम् । यथा,–

चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे ।

---

असाधारणत्वादेवोभयत्र नान्वय इति भाव. । तद्धर्मेति । उपात्तधर्मेत्यर्थः । समन्वयावगतेरिति । पञ्चम्यन्तमिदं 'प्रतीयते'–इत्यत्र हेतुत्वेनान्वेति । सविशेषणस्यैव विशेषणविशिष्टस्यैव । तस्य धर्मिणः । अत्र चक्रवर्त्यादयः, "सविशेषणेति । यदा उपमानान्वितं विशेषणं तदा विशिष्टस्योपमानत्वम्, यदा उपमेयान्वितं विशेषणं तदा विशिष्टस्योपमेयत्वमित्यर्थः । ननूपात्तधर्मस्य विशेषनिष्ठत्वे साधारणधर्माभावात्कथमुपमानिर्वाह इत्यत आह प्रतीयमानेनापीति । शब्दोपस्थापितस्य विशेषनिष्ठत्वेऽपि प्रतीयमानेनैव (गम्यमानेनैव) साधारणधर्मेणोपमानिर्वाह इत्यर्थः । अपिशब्दात् शब्दोपस्थितेनापीति समुच्चीयते"–इत्याहुः । प्रक्रान्तस्य उपमालंकाररूपस्य । स्फुटमनिर्वाहादिति । सर्वत्र झटिति प्रतीत्यनुदयादित्यर्थः । तदुक्तमुद्द्योतेऽपि,–इवादिना धर्मत्वेनापि उपात्तधर्म एव बोध्यते, तस्य निरुक्तोभयनिष्ठत्वे उपमानिर्वाहो नान्यथेति भावः, अपरत्र लिङ्गविपरिणामेन यथाकथंचिदन्वयेऽपि स्फुटत्वाभावेन चमत्कारापकर्ष इति तत्त्वमिति । भग्नप्रक्रमरूपत्वमिति । उक्तरीत्या उपमाने प्रतीयमानतया वाच्यतया वा उपक्रान्तस्य साधर्म्यस्य उपमेये तदन्यथा (वाच्यतया प्रतीयमानतया वा) उपसंहारात् भग्नप्रक्रमत्वमेवेत्यर्थः।

तदेतत्सर्वं विवृतं विवरणकारैः,–साधारणधर्मवाचकपदस्य, भिन्नलिङ्गवचनयोरुपमानोपमेययोरेकतरानुसारिलिङ्गवचनत्वे, भिन्नलिङ्गं भिन्नवचनं चेति दोषद्वयं भोजराजादिसम्मतम्, तद्बीजं तु,–यद्वाचकलिङ्गवचनानुसारि साधर्म्यवाचकं यत् पदं स्यात्, तेनैव तस्यान्वयः स्यात्, न तूभाभ्यामपि, विशेषणविशेष्यभावान्वये समानलिङ्गसमानवचनयोस्तन्त्रत्वात्, उभयत्र (उपमानोपमेययोः) अन्वयाभावे च तस्य साधर्म्यत्वमेव व्याहन्येत, तत्स्वरूपत्वात्तस्य, तदभावे च कथमुपमा? उपात्तस्य साधारणधर्मस्य एकत्र (उपमेये उपमाने वा) अन्वयबलेन, अपरत्र च प्रतीतिबलेन, संबन्धमङ्गीकृत्य उपमानिर्वाहस्तु न सम्यक्, सर्वत्र झटिति प्रतीत्यनुदयादिति । एतच्च दोषद्वयं भग्नप्रक्रमतायामेवान्तर्भवति, उक्तरीत्या उपमाने प्रतीयमानतया वाच्यतया वा उपक्रान्तस्य साधर्म्यस्य उपमेये तदन्यथा (वाच्यतया प्रतीयमानतया वा) उपसंहारादिति प्रकाशकृन्मतमिति ॥

तत्र लिङ्गभेदरूपदोषस्य भग्नप्रक्रमतायामन्तर्भावे उदाहरति चिन्तारत्नमिवेति । चिन्तामणिरिवेत्यर्थः । अत्रोपमेये पुंसि च्युत इति वाच्यो धर्मः, उपमाने चिन्तारत्ने तु

सक्तवो भक्षिता देव ! शुद्धाः कुलवधूरिव ।

यत्र तु नानात्वेऽपि लिङ्गवचनयोः, सामान्याभिधायि पदं स्वरूपभेदं नापद्यते, न तत्रैतद्दूषणावतारः, उभयथाऽपि अस्य अनुगमक्षमस्वभावत्वात् । यथा,–

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ।

---

च्युतमिति लिङ्गविपरिणामेन प्रतीयमानो धर्मः । तथा चात्र च्युतत्वरूपः साधारणधर्मः पुंस्त्वविशिष्टे उपमेयमात्रेऽन्वेति, नतु नपुंसकत्वविशिष्टे उपमाने, विशेष्यविशेषणभावान्वये समानलिङ्गवचनयोस्तन्त्रत्वादिति वाच्यधर्मविशिष्ट-प्रतीयमानधर्मविशिष्टयोरुपमेयोपमानत्वप्रतीतिर्भग्नप्रक्रमत्वमेव । यत्र तु अनुपात्तः साधारणधर्मस्तत्र न दोषः, कल्प्यमानस्य लिङ्गरहितस्यैव कल्पनेनोभयसाधारणत्वात् । एवं च यत्र लिङ्गरहितार्थोपस्थापकतिङन्तेन साधारणधर्मोपस्थितिस्तत्रापि न दोषः, यथा, ‘ स्त्रीव गच्छति षण्ढोऽयम् ’– इत्यादौ । एवं च ‘ चन्द्र इव सुन्दरं मुखम् ’–इत्यादौ दोष एवेति बोध्यमित्युद्द्योते स्पष्टम् ॥

वचनभेदरूपदोषस्य भग्नप्रक्रमतायामन्तर्भावे उदाहरति **सक्तव इति** । हे देव राजन् मया कुलवधूरिव कुलस्त्रीव शुद्धाः पवित्राः सक्तवः भक्षिता इत्यर्थः । अत्र बहुत्वविशिष्टः शुद्धत्वरूपः साधारणो धर्मः बहुत्वविशिष्टेषु सक्तुषु उपमेयेष्वेवान्वेति, नत्वेकत्वविशिष्टे वधूरूपे उपमाने इति वाच्यधर्मविशिष्ट–प्रतीयमानधर्मविशिष्टयोरुपमेयोपमानत्वप्रतीतिर्भग्नप्रक्रमत्वमेव । “ लिङ्गभेदोऽत्र विद्यमानोऽप्यप्रधानम् ” इति प्रदीपः । लिङ्गभेदादप्युपमायोग इति कमलाकरभट्टः ॥

यत्र तु लिङ्गयोर्वचनयोर्वा भेदेऽपि साधारणधर्मवाचकं पदमुपात्तस्वरूपभेदं न प्राप्नोति, किंतु उपात्तेनैव रूपेणोभयत्राप्यन्वेति, तत्र दोषत्वमेव नास्ति, आनुपूर्वीसाम्येनोभयत्राप्यस्यान्वययोग्यस्वभावत्वादित्याह **यत्र त्विसादि** । **नानात्वेऽपि** भेदेऽपि । **लिङ्गेति** । लिङ्गयोर्वचनयोर्वेत्यर्थः । **सामान्याभिधायि** साधारणधर्मवाचकम् । **स्वरूपभेदम्** आनुपूर्वीभेदम् । **नापद्यते** न प्राप्नोति । **एतद्दूषणेति** । भग्नप्रक्रमरूपदोषेत्यर्थः । तत्र हेतुमाह **उभयथेत्यादि** । उभयथाऽपि उभयप्रकारेणापि, उपमानलिङ्गवचनविशिष्टत्वेनोपमेयलिङ्गवचनविशिष्टत्वेनापीत्यर्थः । **अस्य** सामान्याभिधायिपदस्य । **अनुगमक्षमस्वभावत्वात्** अन्वययोग्यस्वभावत्वात् ।

तत्र, लिङ्गभेदेऽपि भग्नप्रक्रमदोषाभावे उदाहरति **गुणैरिति** । गुणैरनर्घैरित्यपि पाठः । महार्णवः अनर्घ्यैः बहुमूल्यैः रत्नैरिव स राजा अनर्घ्यैः पूज्यैः गुणैः प्राथितः प्रसिद्धः अभूदित्यर्थः । अत्रोपमेयोपमानवाचकयोर्गुणरत्नशब्दयोर्लिङ्गभेदेऽपि अनर्घ्यैरिति साधारणधर्मवाचकपदस्य तृतीयाबहुवचनान्तस्य लिङ्गद्वयेऽपि तुल्यरूपत्वान्न भग्नप्रक्रमत्वदोषः ॥

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधतेस्म परां शोभां तदीया विभ्रमा इव॥

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः। यथा,–

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती।
पश्चिमात् यामिनीयामात् प्रसादमिव चेतना॥

---

वचनभेदेऽपि भग्नप्रक्रमदोषाभावे उदाहरति तद्वेष इति। तस्याः प्रकृतनायिकायाः वेषः भूषणाम्बरादिधारणपरिपाटी तदीयाः प्रकृतनायिकासंबन्धिनः विभ्रमा इव हावभेदा इव परां शोभां दधतेस्म। कीदृशः?–मधुरतया भृतः पूरितः, विभ्रमपक्षे मधुरतां बिभ्रति धारयन्ति ये, ते मधुरताभृत इत्यर्थः। अत एव, अन्याभिः स्त्रीभिः अन्यस्त्रीवेषैः असदृशः असमानः, विभ्रमपक्षे अन्याभिः स्त्रीभिः अन्यस्त्रीविभ्रमैः असदृशः असमाना इत्यर्थः। अत्र, तद्वेष इत्युपमेयम्, विभ्रमा इत्युपमानम्; असदृश इति, मधुरताभृत इति, दधत इति च साधारणधर्माभिधायीनि पदानि उभयत्रान्वयसमर्थानीति वचनभेदेऽपि रूपसाम्यान्न दोषः। अत्र, सदृश इति कञन्तैकवचनं क्विन्तबहुवचनं च, भृत इति क्तान्तैकवचनं क्विन्तबहुवचनं च, दधत इति "दध धारणे"–इत्यस्यैकवचनं "डुधाञ् धारणपोषणयोः"–इत्यस्य बहुवचनं च। अत्र श्लेषोऽप्युपमोपपादक एवेति बोध्यमित्युद्द्योतादिषु स्पष्टम्॥

उपमायां कालादिभेदरूपदोषान्तरमपि भग्नप्रक्रमतायामन्तर्भवतीत्याह कालेत्यादि। कालो भूतभविष्यद्वर्तमानरूपः। पुरुषः प्रथममध्यमोत्तमरूपः। विधिः अप्रवृत्तप्रवर्तनरूपो लिङ्-लोट्-तव्य-प्रत्ययार्थः। आदिपदग्राह्यमग्रे (८४३ पृष्ठे) स्फुटीभविष्यति। तथा कालादीनामैक्यस्थले इव। अस्खलितरूपतया अपरिवर्तितस्वरूपेण। विश्रान्तिं परिसमाप्तिम्। न आसादयति न प्राप्नोति। प्रथमं यथा उपमानं प्रतीयते, चरमं तथा नोपमेयं प्रतीयते इति स्थूलार्थ इति विवरणे स्पष्टम्। उद्द्योतकारास्तु, स्खलितत्वं विजातीयविषयत्वम्। विश्रान्तिः चमत्कार इत्याहुः। असावपि कालादिभेदरूपदोषोऽपि। व्याप्तः आक्रान्तः, न तु पृथगित्यर्थः।

तत्र कालभेदरूपदोषस्य भग्नप्रक्रमतायामन्तर्भावे उदाहरति अतिथिमिति। रघुकाव्ये सप्तदशसर्गे पद्यमिदम्। कुमुद्वती कुमुदाख्यनागस्य कन्या ककुत्स्थस्य गोत्रापत्यं पुमान् काकुत्स्थः तस्मात् कुशनामकराजात् अतिथिं नाम पुत्रम् आप प्राप्तवती। का कस्मात् कमिव? चेतना धीः पश्चिमात् चरमात् यामिन्याः निशायाः यामात् प्रहरात्

अत्र, चेतना प्रसादमाप्नोति, न पुनरापेति कालभेदः।

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता।
विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटपप्रभवा लतेव ॥

अत्र लता विभ्राजते न तु विभ्राजसे—इति संबोध्यमाननिष्ठस्य परभागस्य असंबोध्यमानविषयतया व्यत्यासात् पुरुषभेदः।

---

प्रसादम् उद्बोधमिवेत्यर्थः। अत्र, चेतना प्रसादमाप्नोति—इति प्रकृतं न तु तमापेति कालभेदे क्रमभेद एव। तदेवाह अत्रेत्यादि। न पुनरापेति। 'न पुरा आप'—इत्यपि पाठः। यद्यप्यतीतपश्चिमरात्रियामात् चेतना प्रसादमापेति न कालभेदः, तथाऽपि पश्चिमरात्रियामसजातीयादद्यापि प्रसादमाप्नोतीति कालभेद एवेति भाव इत्युद्द्योते स्पष्टम् ॥

पुरुषभेदरूपदोषस्य भग्नप्रक्रमतायामन्तर्भावे उदाहरति प्रत्यग्रेति। रत्नावल्याख्यनाटिकायां प्रथमाङ्के वासवदत्तां प्रति वत्सराजस्योक्तिरियम्। हे सखि त्वं बालानि अभिनवतराणि प्रवालानि किसलयानि यत्र तादृशो यो विटपः शाखा प्रभवः उत्पत्तिस्थानं यस्यास्तादृशी, यद्वा, विटपस्य उत्पत्तिस्थानभूता लतेव विभ्राजसे शोभसे इत्यन्वयः। कीदृशी?—प्रत्यग्रो नूतनो यो मज्जनविशेषः स्नानविशेषः तेन विविक्ता शुद्धा मूर्तिः शरीरं यस्यास्तादृशी, लतापक्षे प्रत्यग्रं नूतनं यत् मज्जनं सेचनं तेन विशेषतो विविक्ता स्वच्छा मूर्तिर्यस्यास्तादृशी। कौसुम्भेन कुसुम्भसंबन्धिना रागेण लौहित्येन रुचिरः सुन्दरः स्फुरन् देदीप्यमानः अंशुकान्तो वस्त्रमध्यभागो यस्यास्तादृशी, लतापक्षे कुसुम्भमेव कौसुम्भं पुष्पं (स्वार्थे प्रज्ञादित्वादण्प्रत्ययः), तद्वत् रागो लौहित्यं तेन रुचिरा चासौ स्फुरद्भिः अंशुभिः पुष्पधूलिभिः किरणैर्वा कान्ता रमणीया। मकरकेतनं कामदेवम् अर्चयन्ती पूजयन्ती, लतापक्षे मकरकेतनं समुद्रम् अर्चयन्ती शोभयन्ती चेत्यर्थः। एवं च प्रत्यग्रेत्यादिविशेषणत्रयमुभयसाधारणम्, बालेत्यादि लताविशेषणमेव। सुधासागरकारास्तु, प्रत्यग्रेत्यादि विशेषणं साधारणम्, कौसुम्भेत्यादि नायिकाविशेषणमेव, बालेत्यादि लताविशेषणमेव। एवं च अंशुभिः पुष्पधूलिभिरिति श्रीवत्सलाञ्छनभट्टाचार्याणां व्याख्यानं प्रामादिकमेव, अंशुपदस्य परागवाचकत्वाभावात् प्रकृतार्थासामञ्जस्याच्चेत्याहुः। वसन्ततिलका छन्दः। लक्षणमुक्तं प्राक् (६४ पृष्ठे)।

अत्र, लता विभ्राजते, त्वं विभ्राजसे-इति प्रथममध्यमरूपपुरुषभेदः। तदेवाह अत्रेत्यादि। संबोध्यमानेति। नायिका वासवदत्ताऽत्र संबोध्यमाना तन्निष्ठस्य तद्विषयकस्येत्यर्थः। परभागस्य भ्राजसे इति क्रियाशेषांशभूतस्य से-प्रत्ययस्य। असंबोध्यमानेति। अचेतनत्वेन लतायाः संबोध्यत्वाभावात् लताऽत्रासंबोध्यमाना तद्विषयकतयेत्यर्थः। व्यत्यासात् (विभ्राजते इति) परिवर्तनात्। पुरुषभेद इति। सोऽयं भग्नप्रक्रमतयै-

'गङ्गेव प्रवहतु ते सदैव कीर्तिः'—इत्यादौ च गङ्गा प्रवहति न तु प्रवहतु—इति अप्रवृत्तप्रवर्तनात्मनो विधेः । एवंजातीयकस्य चान्यस्यार्थस्य उपमानगतस्यासंभवाद्विध्यादिभेदः ॥

ननु समानम् उच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितायाम्

---

च व्याप्त इति पूर्वेणान्वयः । तस्मात् 'विभ्राजते'—इति पाठो युक्तः । न च देवीं संबोध्योक्तेस्तत्र प्रथमपुरुषार्थानन्वयः, हे देवि भवती विभ्राजते इत्यन्वयसंभवात्, भवदर्थस्य संबोध्यासंबोध्यसाधारणत्वेन तत्र तदन्वयसंभवादित्युद्द्योतादौ स्पष्टम् । "अत्र लता विभ्राजते इति प्रस्तुतम्, न तु सा विभ्राजसे इति, तस्मात्पुरुषभेदः, संबोध्यनिष्ठस्य भ्राजनस्यासंबोध्यविषयतयाऽप्रतीतेः"—इति तु प्रदीपः । संबोध्यनिष्ठस्येति । मध्यमपुरुषवाच्यस्य संबोध्यार्थेनैवान्वयादिति भाव इत्युद्द्योतः ॥

विधिभेदरूपदोषस्य भग्नप्रक्रमतायामन्तर्भावे उदाहरति गङ्गेवेति । अत्र, अप्रवृत्तप्रवर्तनरूपस्य विधेर्भेदः, यतो गङ्गा प्रवहतीति विवक्षितं न तु सा प्रवहतु—इति । तदेवाह इत्यादौ चेति । ननु प्रवहत्वित्येवोभयत्रान्वेतु—इत्यत आह नत्विति । विधेरिति । भेद इति शेषः । आशीर्विहितलोट्प्रत्ययस्यानागतेष्टविषयार्थकत्वात् कीर्तावेवान्वयो न तु विद्यमाने गङ्गाप्रवाहे, एवं च यथा गङ्गा प्रवहति तथा कीर्तिः प्रवहत्वित्यर्थे विधेर्भेद इति भावः । विध्यादीत्यादिपदार्थमाह एवं जातीयकस्येति । एवंविधस्येत्यर्थः । अन्यस्यार्थस्येति । 'चिरं जीवतु ते पुत्रो मार्कण्डेयो मुनिर्यथा'—इत्याशीर्वादादिरूपस्येत्यर्थः । उक्तं च प्रभायामपि, अन्यस्य प्रार्थनाद्यर्थस्येत्यर्थ. । 'इन्द्रस्येव श्रियो वृद्धिस्तव संप्रार्थ्यते जनैः'—इत्यादौ प्रार्थ्यमानताविशिष्टा श्रीवृद्धिर्नोपमाने इति द्रष्टव्यमिति । उद्द्योतकारास्तु, ननु प्रवहनस्य सिद्धत्वेऽपि कस्यचिदनागतार्थस्य गङ्गानिष्ठस्य विधिविषयत्वं स्यादत आह एवं जातीयकस्येति । असंभवादिति । उपमेयेऽसंभवादित्यर्थः । वस्तुतस्तु तादृशधर्मान्तरस्य सत्त्वेऽपि तस्य प्रकृत्यर्थत्वाभावान्न तत्र विध्यर्थान्वयसंभव इति बोध्यम् । विध्यादिभेद इति । यद्यपि विधेरेकमात्रान्वयिनो न भेदः, तथाऽपि व्यत्यास एवात्र भेदपदार्थ इत्याहुः ॥

ननूदाहृतेषु इवादिपदेनोभयान्वययोग्यधर्मान्तरेणैव साम्यं बोध्यताम्, उपात्तधर्मस्तु उपमेय एवान्वेतु-इति कथं लिङ्गादिभेदो दोष इति शङ्कते नन्वित्यादिना 'अर्थावगमात्'—इत्यन्तेन । समानमिति । साधारणमित्यर्थः, इदम् अग्रेतनेन धर्मान्तरमित्यनेनान्वेति । उच्चारितम् उपात्तम्, उच्चारितपदबोध्यमिति यावत् । प्रतीयमानमिति । अनुक्तमपि गम्यमित्यर्थः, अध्याहारलभ्यमिति यावत् । धर्मान्तरं कालाद्युपहितोपात्तभिन्नरूपम्, (कालविशेषाद्यनवरुद्धम्) । क्वचित्तु "प्रतीयमानं धर्मान्तरम्"—इति विनैव वाशब्दं

उपमायाम् उपमेयस्य प्रकृतधर्माभिसंबन्धान्न कश्चित्कालादिभेदोऽस्ति । यत्रा- प्युपात्तेनैव सामान्यधर्मेण उपमा अवगम्यते, यथा, युधिष्ठिर इवायं सत्यं वदतीति, तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे । सत्यवादी सत्यं वदतीति च न पौनरुक्त्यम् आशङ्कनीयम्, रैपोपं पुष्णातीतिवत् युधिष्ठिर

---

पाठः । उपादाय अवलम्ब्य । प्रकृतधर्मेति । कालविशेषाद्यवरुद्धधर्मेत्यर्थः । न कश्चि- त्कालादिभेदोऽस्तीति । 'काम इव सुन्दरोऽयं राजा भाति'—इत्यादौ, 'काम इवायं राजा भाति'—इत्यादौ च यथाक्रमम् उच्चारितं प्रतीयमानं च सौन्दर्यरूपं धर्मान्त- रमवलम्ब्य उपमा प्रतीयते, भातीति क्रिया चोपमेये राज्ञ्येवान्वेति, न तूपमानीभूते का- मेऽपीति कथं कालादिभेदो दोष इति समुदायार्थ इत्युद्द्योतादौ स्पष्टम् ।

ननु यत्र नास्ति समानधर्मान्तरम्, अपि तु तिङन्तवाच्यमेवौपम्ये घटकम्, यथा, यु- धिष्ठिर इवायं सत्यं वदतीति, तत्र का गतिः, युधिष्ठिरो हि सत्यमवादीन्नतु सत्यं वदति, तथा चात्र सत्यवादित्वमेव साधर्म्यम्, तच्च वस्तुगत्या भिन्नकालमेवेति कथमत्र पूर्वोक्तं नन्वित्यादिनोक्तं समाधानमित्यत आह यत्रापीत्यादि । यत्र साधारणधर्मान्तरासत्त्वस्थले । अपिः पूर्वोक्तसमुच्चये । उपात्तेनैव भिन्नकालादितया उच्चारितशब्दप्रतिपादितेनैव । उ- दाहरति यथा युधिष्ठिर इत्यादि । अत्रोपात्तं सत्यवादित्वमेव साधर्म्यम्, तच्च भिन्न- कालमेव, युधिष्ठिरे वर्तमानसत्यवचनाभावात्, धर्मान्तरं तु नास्त्येवेति भावः । उत्तरमाह तत्रेति । सत्यवादीति । अत्र "सुप्यजातौ णिनिस्ताच्छील्ये"—इति सूत्रेण ताच्छील्ये णिनिप्रत्ययः, सत्यवदनशील इत्यर्थः सत्यवदनशीलत्वं धर्मान्तरं इवशब्दार्थ इति भावः । प्रतिपत्स्यामहे इति । तथा च सत्यं वदतीति न साधारणधर्मवाचकम्, किंतु प्रतीयमानं सत्यवादीति पदम्, एवं च युधिष्ठिर इव सत्यवदनशीलोऽयमिति तच्छीलत्वस्यातीतादि- कालेष्वपि साम्याद्युपमा, न तु वर्तमानेन सत्यवदनेन योगात्, येनातीते युधिष्ठिरे तदभा- वात्कालभेदः स्यादिति भावः । ननु सत्यवादित्वमात्रेणोपमायां 'सत्यं वदति'—इति पुनरुक्तं स्यादत आह सत्यवादी सत्यं वदतीति । रैपोपं पुष्णातीति । अत्र "स्वे पुषः" (३।४।४०)—इति सूत्रेण (१) रैशब्दे उपपदे पुषधातोर्भावे णमुल्प्रत्ययः, "कषा- दिषु यथाविध्यनुप्रयोगः"—इति सूत्रेण (२) पुष्णातीति पुषधातोरेवानुप्रयोगः । रैपोपं पुष्णातीत्यत्र यथा (काशिकान्यासकारादिमते) धनकरणकपोषणाभिन्ना पुष्टिरिति रीत्या धात्वर्थस्य सामान्यविशेषभावेन विशेषणविशेष्यभावान्न पौनरुक्त्यम्, तथाऽत्रापीत्यर्थः ।

---

१ सूत्रेणेति । अत्र "करणे हनः"-(३।४।३७)—इति सूत्रात् करणे इत्यनुवर्तते, स्वे इत्यर्थग्रहणम्, तेन स्वरूपे पर्याये विशेषे चोपपदे णमुल् । स्वपोषं पुष्णाति, धनपोषं पुष्णाति, गोपोषं पुष्णातीत्युदा- हरणानि ॥ २ इति सूत्रेणेति । व्याख्यातमिदं प्राक् (६२७ पृष्ठे) ॥

इव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात्। सत्यमेतत्, किं तु स्थितेषु प्रयोगेषु समर्थनमिदं न तु सर्वथा निरवद्यम्, प्रस्तुतवस्तुप्रतीतिव्याघातादिति, सचेतस एवात्र प्रमाणम्॥

---

अत्र युधिष्ठिर इवेत्यनेन सत्यवदनस्वभावत्वं प्रतीयते इति विवरणे स्पष्टम्। पोषणसामान्येन धनव्ययकृतपोषणाभिदबोधार्थतया नानुप्रयोगे पौनरुक्त्यदोषः, एवं सत्यवदनसामान्यस्य स्वाभाविकयुधिष्ठिरसंबन्धिसत्यवदनरूपतात्बोधरूपप्रयोजनसत्त्वान्न पुनरुक्तदोष इत्यर्थ इति प्रभायामपि स्पष्टम्। रैपोषमित्यत्रार्थव्ययेन पोषणस्यैवात्राप्याजानिकमत्यवादित्वस्य प्रतीतेर्न पौनरुक्त्यं दोष इति प्रदीपः। रैपोषमित्यत्र पुषेः प्रयोगः साधुत्वार्थ एव। अर्थव्ययेनेति। न तु कार्पण्येन यथाकथंचिदित्यर्थः। आजानिकेति। स्वाभाविकेत्यर्थः। धनकृतं पोषणमित्यर्थलाभाय रैपोषमित्युक्तेर्न वैयर्थ्यम्, यथा युधिष्ठिरो लोभादिना न सत्यं वक्ति किंतु ताच्छील्यात् तथाऽयमपीत्यर्थलाभान्न वैयर्थ्यमिति भावः। एवं गङ्गेवेत्यादावत्युज्ज्वलेत्यादिपदाध्याहारेण दोषोद्धार इत्याशय इत्युद्द्योतः। यद्यपि राया धनेन पोषयित्वेति रैपोषं यथा स्यात्तथा पुष्णातीत्यनुप्रयोगानुशासनान्न पौनरुक्त्यम्, प्रकृते च तदभावात्पौनरुक्त्यमेव, तथाऽपि 'घटेन घटवद्भूतलम्'—इतिवत् सत्यवदनेनायं सत्यवादीति न पौनरुक्त्यमिति ध्येयम्। तत्र पोषणवदत्र सत्यवदनमात्रेणोपमा, तेन कालादिभेदो न दोष इति महाशङ्कार्थ इति कमलाकरभट्टः।

एतादृगान्वयाध्याहारादिकल्पनमानुभाविकमित्याशयवान् अर्धाङ्गीकारेण परिहरति सत्यमेतदिति। सत्यमित्यर्धाङ्गीकारे। स्थितेष्विति। रैपोषमित्यादिषु साधुत्वार्थं नियमितेषु अनुप्रयोगेषु कथंचित्समर्थनं नतु सर्वथैव तन्निरवद्यमित्यर्थः। तत्र हेतुमाह प्रस्तुतेति। प्रस्तुतस्य प्राकरणिकस्य वस्तुनः उपमायाः (साधर्म्यस्य झटिति प्रतीत्यनुदयेन) प्रतीतेर्विलम्बरूपाद्विघातादित्यर्थः। तथा चौपम्यप्रतीतौ कालादेरेकमात्रान्वयित्वादन्यत्र भङ्गेन भग्नप्रक्रमत्वानपाय एवेति भावः। सचेतसः सहृदयाः। प्रमाणं साक्षिणः। व्याख्यातमिदं प्रदीपोद्द्योतादिषु,—किंतु स्थितेष्वनुप्रयोगेषु कथंचित्तथा पुनरुक्तिमात्रसमर्थनं नतु सर्वथैव तन्निरवद्यम्, प्रस्तुतस्य रसादेः प्रतीतिस्खलनात्। न च तदसिद्धम्, सहृदयवेद्यत्वात्। किंचोपात्तधर्ममनादृत्य प्रतीतेन धर्मेणोपमेति तुच्छम्, उपात्तक्रिययैव तद्विलक्षणात्, उपस्थितसाधर्म्यं विहायानुपस्थितसाधर्म्यकल्पने श्रुतहान्यश्रुतकल्पनाभ्यामास्वादनकर्षप्रतिबन्धात्। एवं च 'गङ्गेव प्रवहतु'—इत्यादौ अत्युज्ज्वलेत्यादिपदाध्याहारे दोषोद्धारेऽपि न सर्वथा निरवद्यतेति। चक्रवर्त्यादयस्तु 'घटेन घटवद्भूतलम्'—इत्यादौ लौकिकवाक्ये यथाकथंचित्समर्थनेऽपि काव्ये कथितपदत्वापुष्टार्थत्वादिदोषो दुर्वार एवेति दिगित्याहुः॥

असादृश्यासंभवावप्युपमायाम् अनुचितार्थतायामेव पर्यवस्यतः । यथा,–

ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ।

अत्र, काव्यस्य शशिना, अर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम् ।

निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात् ॥

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलात् निष्पतन्त्यो न संभवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ॥

उत्प्रेक्षायामपि, संभावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते, न यथाशब्दो-

---

असादृश्यासंभवयोरुपमादोषयोरनुचितार्थतायामन्तर्भावमाह **असादृश्येति** । **अनुचितार्थतायामिति** । इदमापाततः, वस्तुतस्तु अप्रयुक्तत्वमेवात्र दोषः, अन्यथा कष्टार्थोदाहरणे ‘महाकाव्यव्योम्नि’–(४३१ पृष्ठे)–इत्यादौ यथाकथंचित्साधर्म्येणेवात्राप्याह्लादकत्वादिना काव्यशशिनोरौपम्याक्षतेरिति मन्तव्यमिति चक्रवर्ती । असादृश्यरूपदोषस्यानुचितार्थतायामन्तर्भावे उदाहरति **ग्रथ्नामीति** । काव्यं शशीव, अर्था रश्मय इवेत्युपमितसमासः । न च काव्यमेव शशीत्यादिरीत्या रूपकसमास एवास्तु, रूपकस्यापि सादृश्यमूलकत्वात्तत्राप्ययं दोषः संभवतीति वाच्यम्, ग्रथ्नामीति बाधकाववारादिति बोध्यम् । **कुत्रापि न प्रतीतमिति** । न क्वापि प्रसिद्धमिति तत्रोपमानिबन्धनमनुचितार्थमिति भावः । न चार्था रश्मय इव प्रीतिदायिन इति साधर्म्यसिद्धेः काव्यशशिनोरपि तत्सिद्धिरिति चेन्नैवम्, इतरेतराश्रयपराहतत्वादिति सरस्वतीतीर्थः ॥

असंभवरूपदोषस्यानुचितार्थतायामन्तर्भावे उदाहरति **निपेतुरिति** । धनुर्मण्डलमध्यगतस्य तस्य राज्ञः आस्यात् मुखादिवेत्युत्प्रेक्षा, तूणाद्बाणाकर्षणे विलम्बः स्यादिति भावः, दीप्ताः शराः बाणाः निपेतुः । दिनार्धभाजः परिवेषशालिनः अर्कात् सूर्यात् जाज्वल्यमानाः अतिशयेन ज्वलन्त्यः वारिधारा इवेत्यर्थः । अत्र धनुर्मण्डलं परिवेषश्च बिम्बप्रतिबिम्बभावापन्ने । उपजातिश्छन्दः । लक्षणमुक्तं प्राक् (७९ पृष्ठे) ।

अत्रोपमानाप्रसिद्धिर्दोषः, स चोक्तायामनुचितार्थतायां पर्यवस्यति । तदेवाह **अत्रापीति** । **अर्थः** उपमानरूपः । **अनौचित्यमेवेति** । अप्रयुक्तत्वसांकर्यमप्यत्रेति बोध्यमित्युद्द्योते स्पष्टम् ॥

उत्प्रेक्षादोषस्याशक्तशब्दत्वस्यावाचकत्वेऽन्तर्भावमाह **उत्प्रेक्षायामिति** । **ध्रुवेवादय इति** । आदिना मन्ये-शङ्के-अवैमि-नूनम्-इत्यादिपरिग्रहः । **सहन्ते इति** । समर्थाः भवन्ती-

ऽपि, केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात्, तस्य चास्याममविवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः। यथा,—

उद्ययौ दीर्घिकागर्भात् मुकुलं मेचकोत्पलम्।
नारी-लोचन-चातुर्य-शङ्का-संकुचितं यथा॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वात् निरुपाख्यप्रख्यम्, तत्समर्थनाय यत् अर्थान्तरन्यासोपादानम्, तत् आलेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्य, अनुचितार्थतैव दोषः। यथा,—

दिवाकराद्रक्षति यो गुहासु लीनं दिवा भीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसामतीव॥

---

त्यर्थः। उत्सहन्ते इत्यपि क्वचित्पाठः। केवलस्य पदान्तरेणासमस्तस्य, समस्तस्य तु यथोचितं-यथायोगं-यथार्थम्-यथाशक्ति-इत्यादिषु योग्यता-वीप्सा-पदार्थानतिवृत्तिरूपान्यार्थकत्वमस्त्येवेति बोध्यम्। अस्य यथाशब्दस्य। साधर्म्यं सादृश्यम्। पर्याप्तत्वात् समर्थत्वात्। तस्य च साधर्म्यस्य च। अस्याम् उत्प्रेक्षायाम्। तत्र संभावनाभिधाने। अस्य यथाशब्दस्य। अवाचकत्वमिति। उत्प्रेक्षायां यथाशब्दोपादानेऽवाचकत्वमेवेत्यर्थ।

उदाहरति उद्ययाविति। मुकुलं मुकुलितं ( मुकुलभावापन्नं ) मेचकोत्पलं नीलोत्पलं नारीलोचनचातुर्यशङ्कासंकुचितं यथा सुन्दरीनयनचातुर्यमधिकमिति शङ्कया संकुचितमिव दीर्घिकागर्भात् वापीमध्यात् उद्ययौ प्रादुरासीदित्यर्थः। अत्र यथाशब्दस्यावाचकत्वमेव दोषः॥

निर्विषयत्वमपि उत्प्रेक्षितार्थसमर्थकार्थान्तरन्यासदूषणमनुचितार्थतायामन्तर्भवतीत्याह उत्प्रेक्षितमपीति। संभावितमपीत्यर्थः। तात्त्विकेन वास्तविकेन। परिवर्जितत्वात् रहितत्वात्। निरुपाख्येति। निरुपाख्यम् अलीकं शशविषाण-गगनकुसुमादि तत्प्रख्यं तत्तुल्यमित्यर्थः। तत्समर्थनाय उत्प्रेक्षितार्थसाधनाय। आलेख्यमिव चित्रमिव, नानावर्णलेखनमिवेति यावत्। गगनतले आकाशस्वरूपे। "अधःस्वरूपयोरस्त्री तलम्"—इत्यमरः। निर्विषयत्वं निर्विषयत्वं नाम दूषणम्। एतस्य अर्थान्तरन्यासस्य॥

तदुदाहरति दिवाकरादिति। कुमारसंभवे प्रथमसर्गे हिमालयवर्णनमिदम्। यः हिमाद्रिः दिवा दिवसे दिवाकरात् सूर्यात् भीतं त्रस्तमिव अत एव गुहासु दरीषु लीनं तिरोभूतम् अन्धकारं रक्षति त्रायते। अर्थान्तरं न्यस्यति क्षुद्रेऽपीति। नूनं निश्चितम्, शरणं प्रपन्ने प्राप्ते क्षुद्रे नीचेऽपि उच्चैः उन्नतं शिरो येषा तादृशानां महताम् अतीव अत्यन्तं ममत्वं 'भवति'—इति शेषः। 'सतीव'—इति पाठे क्षुद्रेऽपि सति सज्जने इवेत्यर्थः। उपजातिश्छन्दः। लक्षणमुक्तं प्राक् ( ७९ पृष्ठे )

अत्राचेतनस्य तमसो दिवाकरात्त्रास एव न संभवतीति कुत एवं तत्प्रयोजितमद्रिणा परित्राणम्, संभावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः ।

साधारणविशेषणवशादेव समासोक्तिरनुक्तमपि उपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावात् अनुपादेयत्वं यत्, तत् अपुष्टार्थत्वं पुनरुक्तत्वं वा दोषः । यथा,–

---

अत्रेत्यादि । त्रासः चित्तवृत्तिविशेषरूपः । संभावितत्वेन उत्प्रेक्षितत्वेन । प्रतिभासमानस्य प्रतीयमानस्य । व्यर्थ एव निष्फल एव । यत्नः अर्थान्तरन्यासरूपः । अयं हि वृत्तिग्रन्थः बहुभिर्बहुधा व्याख्यातः । तथा हि,–अत्रोत्प्रेक्षाविषयस्य तमसो भयस्यालीकतया तन्मूलस्यार्थान्तरन्यासस्य निर्विषयत्वं दोष इति चन्द्रिका । अत्र तमसस्त्रास एवासंभवी, तमसोऽचेतनत्वात्, तत्कथं तत्प्रयुक्तमद्रिणा तत्परित्राणम्, उत्प्रेक्षितत्रासवत्तया(१) प्रतीतस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनाय यत्न इति प्रदीपः । तत्परित्राणमिति । अद्रेरप्यचेतनत्वादिदमप्युत्प्रेक्ष्यम्, त्रासस्य चित्तवृत्तिविशेषरूपस्य तत्परित्राणस्य च चेतनधर्मत्वात्, तदाह उत्प्रेक्षितत्राणवत्तयेति ।–इत्युद्द्योतः । अत्र स्वतःसंभवित्वपक्षे दूषणमिदम्, कविप्रौढोक्तिनिष्पन्नत्वपक्षे तु न दोषः, "पीडणभीरुव्व" ( १९९ पृष्ठे )–इत्यादौ स्वयमुदाहृतत्वात् । नन्वद्रिणा तत्त्राणमुत्प्रेक्षितमुच्यते इत्यत आह संभावितत्वेनेति । तदा नानुपपत्तिः, तथा च किं समर्थितं द्वितीयार्धेनेति सारबोधिनी । अनुपपत्तिनिवारणार्थं हि अर्थान्तरमुपन्यस्यते, न चात्रानुपपत्तिः, अनवधारितस्वरूपत्वादस्य; निश्चितस्वरूपस्यैव हि उपपादनमुचितम् । यत्र तु अतात्त्विकमपि कविप्रौढोक्त्या निश्चितस्वरूपं तत्र "सुसितवसनालंकारायाम्", ( ७२३ पृष्ठे )–इत्यादौ अतात्त्विकस्यापि समर्थनं न दोषायेति बोध्यमिति विवरणम् । अत्र स्वतःसंभवित्वपक्षे दूषणमिदम्, प्रौढोक्तिनिष्पन्नत्वपक्षे तु न दोषः, "पीडणभीरुव्व"–इत्यादावुत्प्रेक्षायाः स्वयमुदाहृतत्वादिति यत् भ्रान्तसमाधानं तन्मन्दम्, उत्प्रेक्षासमर्थकार्थान्तरन्यासस्यैवात्र दूषितत्वात्, उत्प्रेक्षायाः पुनरदुष्टत्वादेवेतीति विस्तारिकेत्यलम् ॥

अथ समासोक्तौ उपमानविशेषोपादाने अनुपादेयत्वं दोषः, स चापुष्टार्थत्वे पुनरुक्तत्वे वा अन्तर्भवतीत्याह साधारणेति । सदृशविशेषणबलादेवेत्यर्थः । तस्य उपमानविशेषस्य । अत्र समासोक्तौ । अपुष्टार्थत्वमित्यादि । प्रतीतस्यापि पुनरुपादानं न प्रस्तुतार्थं पुष्णातीत्यपुष्टार्थत्वम् । यदि अर्थतः प्रतीतस्यापि उपादाने पुनरुक्तिस्तदा अर्थपुनरुक्तत्वं दोष इति विवरणप्रदीपयोः स्पष्टम् ॥

---

१ उत्प्रेक्षितत्राणवत्तयेति पाठः उद्द्योतसम्मतः ॥

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अ-तनु-मान-परिग्रहया स्थितं रुचिरया चिरयाऽपि दिनश्रिया ॥

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया नायिकात्वेन च व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन ।

श्लेषोपमायास्तु स विषयः, यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः । यथा,—

---

तदुदाहरति स्पृशतीति । रत्नाकरकविकृते हरविजयकाव्ये तृतीयसर्गे ग्रीष्मवर्णनमिदम् । तिग्मरुचौ सूर्ये ककुभः दिशः करैः स्पृशति सति विजृम्भिततापया विवृद्धतापया दयितयेव दिनश्रिया ग्रीष्मदिवसशोभया अतनुर्दीर्घो मानपरिग्रहो यस्यास्तथाभूतया स्थितमित्यन्वयः । कराः रश्मयो हस्ताश्च । तापो ज्वाला खेदश्च । मानं परिमाणं मानः कोपश्च । किंभूतया ?—चिरया दीर्घया, चिरकालिकया च । रुचिरया मनोहरयेत्यर्थः । द्रुतविलम्बितं वृत्तम् । लक्षणमुक्तं प्राक् ( ८२ पृष्ठे ) ।

अत्र समासोक्तौ श्लिष्टविशेषणबलेन लिङ्गविशेषवशेन च तिग्मरुचेर्नायकत्वेन, ककुभां च नायिकात्वेनाभिव्यक्तिवत् ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेनाभिव्यक्तिसंभवात् दयितयेत्यपुष्टार्थम् । तदेवाह अत्रेत्यादि । सदृशविशेषणेति । तिग्मरुचेः करेण स्त्रीस्पर्शकारित्वं नायिकोचितं विशेषणम्, ककुभां च करेण पुरुषस्पृश्यत्वं नायिकायोग्यं विशेषणमित्यर्थः । व्यक्तिविशेषेति । लिङ्गविशेषपरिग्रहणेनेत्यर्थः; तिग्मरुचेः पुंलिङ्गयोगेन, ककुभां च स्त्रीलिङ्गयोगेनेति यावत् । व्यक्तिरिति । अभिव्यक्तिरित्यर्थः, प्रतीतिरिति यावत् । तथा तद्वत् । ग्रीष्मदिवसश्रियोऽपीति । तत एवेति शेषः । अतनुमानपरिग्रहयेति विशेषणात् स्त्रीलिङ्गाच्चेत्यपि बोध्यम् । प्रतिनायिकात्वेनेति । अभिव्यक्तिरिति शेषः । स्वशब्दोपादानेन उपमानशब्दग्रहणेन ॥

ननु 'स्पृशति'—इत्यत्र, यथा दयिते दयितां करैः स्पृशति सति दयितान्तरस्य तापः, तथा रवौ करैः दिशः स्पृशति सति ग्रीष्मदिवसश्रियोऽपि तापः—इत्येव श्लेषात् श्लेषोपमैवेयं स्यात्, नतु समासोक्तिः, तथा चोपादेयमेव दयितयेति पदमित्यत आह श्लेषोपमायास्त्विति । श्लेषमूलकोपमायास्त्वित्यर्थः । स विषयः तत् स्थलम् । उपमानस्येति । अस्य 'न तथा प्रतीतिः'—इत्यत्रान्वयः । उपादानमिति । अर्थादुपमानस्येति बोध्यम् । अन्तरेण विना । साधारणेष्वपि श्लिष्टेष्वपि । न तथा प्रतीतिः न पूर्वोदाहरणवत् प्रतिपत्तिः, पूर्वोदाहरणे उपमानस्योपादानं विनाऽपि लिङ्गविशेषादिना यथा उपमानस्य प्रतीतिर्भवति तथा नेति भावः । "न तथा प्रतीतिः न स्फुटा

स्वयं च पल्लवाताम्रभास्वत्करविराजिता ।
प्रभातसंध्येवास्वापफलल्लुब्धेहितप्रदा ॥–इति ।

अप्रस्तुतप्रशंसायामपि उपमेयम् अनयैव रीत्या प्रतीतं न पुनःप्रयोगेण कदर्थतां नेयम् । यथा,–

आहूतेषु विहंगमेषु मशको नायान् पुरो वार्यते,
मध्येवारिधि वावसंस्तृणमणिर्धत्ते मणीनां रुचम् ।

---

प्रतिपत्तिः " इति तु प्रदीपः । श्लेषोपमामुदाहरति स्वयं चेति । नवमोल्लासे ( ९८२ पृष्ठे ) व्याख्यातमिदम् । अत्र श्लेषोपमैव, संध्यारूपोपमानोपादानं विना समासोक्तिप्रतीतेरभावादिति माणिक्यचन्द्रकृतसंकेते स्पष्टम् । अत एव 'न तथा प्रतीति'–इति प्रतीकमुपादाय चक्रवर्तिनोऽप्याहुः,–इदमत्राभिसंहितम्,–यत्रोपमानस्य स्वपदोपादानेऽपि न समासोक्तिभङ्गस्तत्रावश्यकसमासोक्त्यैव चमत्कारादुपमानस्य स्वशब्दोपादानं व्यर्थम्, यथोदाहृते स्पृशतीत्यादौ, अत्र हि दयितयेत्युपादानेऽपि तिग्मरुचेर्नायकत्वं दिवसश्रियश्च प्रतिनायिकात्वं यथायोग्यविशेषणवशेन प्रतीयत एवेति समासोक्तेरावश्यकत्वम्, यत्र तूपमानोपादाने समासोक्तिर्निवर्तते तत्रोपमाया एव चमत्कारनिर्वाहकत्वादुपादेयमेवोपमानम्, यथा, स्वयंचेत्यादौ, अत्रोपमानोपादाने समासोक्त्यप्रतीतेरिति दिक्–इति । उद्द्योतकारा अप्याहुः,–अयमाशयः, यत्रोपमानस्य स्वपदेनोपादानेऽपि न समासोक्तित्यागस्तत्रावश्यकसमासोक्त्यैव निर्वाहे उपमानपदोपादानं व्यर्थम्, यथा स्पृशतीत्यादौ, अत्र दयितयेत्युपादानेऽपि रवेर्नायकत्वं ककुभां नायिकात्वं च समासोक्त्यैवेति तस्या आवश्यकत्वम्, यत्र तूपमानपदोपादाने समासोक्तिनिवृत्तिस्तदनुपादाने च यत्रोपमान[ना]प्रतीतिः, उपात्तसाधारणधर्माणामुपमेयमात्रान्विततयैव प्रतीतेः, तत्रोपमाया एव चमत्कारित्वाय देयं तत्पदम्, यथा स्वयंचेत्यादौ, अत्रोपमानपदोपादाने समासोक्तित्यागादिति-इति ॥

अप्रस्तुतप्रशंसायामपि साधारणविशेषणैः प्रस्तुतस्य प्रतीतौ पुनः स्वपदोपादानस्य यद्वैयर्थ्यं तदपुष्टार्थत्वमेव दोष इत्याह अप्रस्तुतेति । उपमेयं प्रस्तुतमित्युद्द्योते स्पष्टम् । अनयैव रीत्येति । 'साधारणविशेषणबलात्'–इति समासोक्तिदूषणोक्तरीत्येत्यर्थः । प्रतीतम् अभिव्यक्तम् । कदर्थतां दुष्टताम् । पुनःप्रयोगेणापुष्टार्थतां न नेयं न प्रापणीयम्, तेन स एव दोष इति भावः । तदुदाहरति आहूतेष्विति । भल्लटकविकृते भल्लटशतके ६९ पद्यमिदम् । अविवेकिनः प्रभोर्निन्देयम् । अत्र, आद्यपादत्रयेऽपि 'यत्र'–इत्यादिः । तथा च, यत्र यस्मिन् सामान्ये विहंगमेषु विहायसा गच्छन्तीति विहंगमाः पक्षिणः तेषु आहूतेषु आकारितेषु सत्सु पुरः अग्रे आयान् आगच्छन्

खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां,
धिक् सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥

अत्र, अचेतनस्य प्रभोरप्रस्तुत-विशिष्ट-सामान्य-द्वारेणाभिव्यक्तौ न युक्तमेव पुनः कथनम् ।

तदेतेऽलंकारदोषाः यथासंभविनोऽन्येऽप्येवंजातीयकाः पूर्वोक्तयैव दोषजात्या अन्तर्भाविताः, न पृथक् प्रतिपादनमर्हन्तीति

---

मशकः मक्षिकातोऽप्यतिलघुः कीटविशेषः न वार्यते नोपरुध्यते, तस्यापि विहङ्गमत्वादिति भावः । तथा, यत्र सामान्ये तृणमणिः प्रवालं काचमणिर्वा मध्येवारिधि वारिधिमध्ये वावसन् अतिशयेन वसन् मणीनां पद्मरागमरकतादीनां रत्नानां रुच कान्ति ' धुरम् '—इति पाठे प्रतिष्ठाभारं धत्ते । तथा, खद्योतः ज्योतिरिङ्गणापरपर्यायः कीटविशेषोऽपि तेजस्विनाम् अग्निसूर्यादीनां मध्ये अपिशब्दादग्रे वा प्रचलितुं गन्तुं न कम्पते न बिभेति । एतत् सामान्यं समानधर्मवत्त्वं विहंगमत्वादिमत्त्वं धिक्-इत्यन्वयः । कीदृशम् ? अचेतनं विवेकशून्यम् । अत एव अनामृष्टम् अनालोचितं तत्त्वान्तरं स्वरूपतारतम्यम् । कमिव ? तादृशं प्रभुमिवेत्यर्थः । मध्येवारिधीति "पारेमध्ये षष्ठ्या वा" ( २।१।१८ )—इति सूत्रेणाव्ययीभावः समासः । वावसन्-इति यङ्लुकि रूपम् । 'मध्ये वा धुरि वा वसन् '—इति पाठे मणीना मध्ये धुरि अन्ते वा वसन् निवसन्नित्यर्थः । तृणापकर्षको मणिविशेषः तृणमणिरिति केचित् । क्षुद्रमणिरित्यन्ये । शार्दूलविक्रीडितं छन्दः ।

अत्र तादृशं सामान्यं धिगित्येतावतैवाविवेकिनः प्रभोरवगतिसंभवात्पुनस्तदुक्तिरयुक्तेति अपुष्टार्थत्वं पुनरुक्तत्वं वाऽप्रस्तुतप्रशंसायां दोषः । तदेवाह अत्रेत्यादि । अप्रस्तुतेति । अप्रस्तुतं यत् विशिष्टं विशेषणयुक्तं सामान्यं तद्द्वारेण तन्मुखेनेत्यर्थः । अभिव्यक्तौ प्रतीतौ सत्याम् ॥

अलंकारदोषानुपसंहरति तदिति । तस्मादित्यर्थः । एते उक्ताः । अन्येऽपि रुद्रटाद्यैरुक्ताः । एवंजातीयका इति । उपमायामुपमाविरुद्धोक्तिः, यथा, ' दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव '—इत्यत्र राजनि इन्दुतादात्म्यारोपः उपमाविरुद्धः । तथा, समासोक्तौ नपुंसके नायकव्यवहारसमारोपः, यथा, ' अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः '—इत्यर्थके ' ऐन्द्रीमुखं चुम्बन्तीदं रक्तं सचन्द्रमण्डलम् '—इत्यत्र नपुंसके चन्द्रमण्डले नायकव्यवहारसमारोपः । एवं विरोधालकारे भिन्नाधारयोर्विरोधवर्णनम्, यथा, ' या घर्मभासस्तनयाऽपि शीतलैः, स्वसा यमस्यापि जनस्य जीवनैः । कृष्णाऽपि शुद्धेरधिकं विधायिभिर्विहन्तुमंहांसि जलैः पटीयसी ॥'—इत्यत्र घर्मभासस्तनयात्वादीनां शीतलत्वादीनां विरोधः उक्तः, स च भिन्नाधारतयैव निर्देशान्न संभवति, एकाश्रयत्वेनैव विरो-

संपूर्णमिदं काव्यलक्षणम् ॥

इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता संघटनैव हेतुः ॥ १ ॥

इति काव्यप्रकाशेऽर्थालंकारनिर्णयो नाम दशम उल्लासः ॥

समाप्तश्चायं काव्यप्रकाशः ॥

---

धस्य निरूपितत्वादिति । तदेतत्सर्वमनुचितार्थत्वादावन्तर्भावमर्हति । तदेवाह **पूर्वोक्तयैवेति** । सप्तमोल्लासोक्तयैवेत्यर्थः । **संपूर्णमिति** । लेशतोऽपि न्यूनताविरहादिति भावः। **काव्यलक्षणमिति**। काव्यं लक्ष्यते स्वरूपतो विशेषतश्च ज्ञाप्यतेऽनेनेति प्रकृतग्रन्थरूपमित्युद्द्योतादौ स्पष्टमिति शिवम् ॥

ननु पूर्वग्रन्थेषु सत्सु किमनेनेत्यत आह **इत्येष इति** । एषः मार्गोऽद्भुतं वर्त्म विदुषां ध्वनिकारादीनां नानाग्रन्थतया विभिन्नोऽपि अनेकरूपोऽपि यत् अभिन्नरूपः प्रतिभासते एकरूपतया यत् भाति, न तद्विचित्रम् । यत् यस्मात्कारणात् अमुत्र ग्रन्थे सम्यग्विनिर्मिता संघटना विसंष्ठुलस्य सुखप्रतीत्यर्थमेकत्र संग्रहः सैव हेतुः तद्वशादेकात्मताप्रतीतेः, कृतसर्वसंग्रहार्थोऽयं ग्रन्थः, अतो न तैः सिद्धिरिति भावः । अथ च सुधियां विकासहेतुरयं ग्रन्थः कथंचिदपूर्णत्वादन्येन पूरितशेष इति द्विखण्डोऽप्यखण्ड इव यद्भाति तत्रापि संघटनैव सन्निमित्तमित्यर्थ इति सोमेश्वरकृतसंकेतादौ स्पष्टम् । व्याख्यातं च निदर्शनकारैरपि,—"विदुषां ध्वनिकृत्प्रभृतीनां य एष मार्गः स्वसिद्धान्तः तद्ग्रन्थगतः, तेन पृथगवस्थितोऽपि एकरूपतया प्रतिभाति, तत्र संघटनैव निमित्तम्, विक्षिप्तस्य सुखावबोधायैकत्र संग्रहणं संघटना, तद्वशादेकात्मताप्रतिभासात् । एतेन च महामतीनां प्रसरणहेतुरेष ग्रन्थः ग्रन्थकृताऽनेन (मम्मटेन) कथमप्यसमाप्तत्वात् अपरेण (अल्लटेन) च पूरितावशेषत्वात् द्विखण्डोऽपि अखण्डतया यदवभासते, तत्र संघटनैव हेतुः, न हि सुघटितस्य संधिबन्धः कदाचिदपि विलक्ष्यते—इत्यर्थशक्त्या ध्वन्यते । यदुक्तम्, "कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः । प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा ॥"—इति। अन्येनाप्युक्तम्, "काव्यप्रकाशदशकेऽपि, निबन्धकृद्भ्यां द्वाभ्यां कृतेऽपि कृतिनां रसतत्त्वलाभः। लोकेऽस्ति विश्रुतमिदं नितरां रसालं नन्व[वन्य]प्रकाररचितस्य तरोः फलं यत् ॥"—इति । एवमेवायं श्लोको माणिक्यचन्द्रेण जयन्तभट्टेनापि च व्याख्यातः । सरस्वतीतीर्थकमलाकरादिभिरपि व्याख्यात इत्यास्तां विस्तरः ॥

देशे महामहाराष्ट्रे पत्तने पुण्यनामके ।
प्रधानपाठशालायामांग्लभूपनियोगतः ॥ १ ॥

अलंकारव्याकरणाध्यापकेन द्विजन्मना ।
कर्नाटकप्रान्तजुषा झळकीग्रामवासिना ॥ २ ॥
रामचन्द्रतनूजेन वामनाचार्यशर्मणा ।
काव्यप्रकाशटीकेयं ग्रथिता बालबोधिनी ॥ ३ ॥
शाके वेदनभोष्टेन्दुप्रमिते ( १८०४ ) मासि कार्तिके ।
सपूरिता शुक्लपक्षे टीकेयं प्रतिपत्तिथौ ॥ ४ ॥
टीकाया बालबोधिन्या यदत्र लिखितं मया ।
प्रायः प्राचीनटीकासु स्पष्टं तत्सूक्ष्मदर्शिनाम् ॥ ५ ॥
तथाऽप्यज्ञानदोषाच्चेत् स्खलितं लिखिते मया ।
संशोधयन्तु विद्वांसः परं साराभिमानिनः ॥ ६ ॥
काव्यप्रकाशगम्भीरभावबोधो न चान्यतः ।
इति हेतोर्मया यत्नः कृतोऽयं विदुषा मुदे ॥ ७ ॥
अनेन प्रीयतां देवो रुक्मिणीवल्लभो हरिः ।
कुलदैवतमस्माकं भक्ताभीष्टप्रदः सदा ॥ ८ ॥

इति श्रीमच्छालङ्कायनमहर्षिगोत्रावतंसस्य दैवज्ञचक्रचूडामणेः सुगृहीतनाम्नो भट्टव्यंकटेशस्य कुले गृहीतजन्मना तैत्तिरीयशाखाध्यायिना पूर्णप्रज्ञाचार्यमतानुयायिना सरस्वतीगर्भजेन झळकीकरोपनाम्ना भट्टवामनाचार्येण विरचितायां काव्यप्रकाशटीकाया बालबोधिन्या दशम उल्लासः ॥ १० ॥

---

## ॥ शुद्धीपत्रम् ॥



| अशुद्धम् | शुद्धम् | पृष्ठस्य पङ्क्तौ |
|---|---|---|
| लक्षणायाम् | लक्षणायाः | १–१८ |
| नियमराहिता | नियमराहिताम् | २– १ |
| सूर्यजाल | जालसूर्य | ३–२६ |
| आस्वादजनकत्वस्य | आस्वादव्यञ्जकत्वस्य | १०–२३ |
| आस्वादजनकत्वस्य | आस्वादव्यञ्जकत्वस्य | ११– ४ |
| लक्ष्यतावच्छेदकस्य | लक्ष्यतावच्छेदककस्य | ११– ५ |
| केचित् | प्रभायां स्पष्टम् | ३०–२९ |
| अन्येतु | सारबोधिन्युद्द्योतकारादयस्तु | ३०–२९ |
| ९।१।१९३ | ( ९।२।१०३ ) | ३१–२३ |
| उद्द्योतकारास्तु | उद्द्योतकारा अपि | ३७–१८ |
| कारणम्, व्यञ्जना वाऽऽक्षेप इत्याहुः | कारणमित्याहुः | ३७–१९ |
| शुद्धत्वे | शुद्धात्वे | ३९– ५ |
| अथवा | वस्तुतस्तु | ४२– ६ |
| मध्वस्थपुरुपे | मध्वस्थबालके | ४४–१२ |
| ‘ स्वसिद्धये ’ | ‘ सारोपान्या तु ’ | ४६–२१ |
| परिमितविपयत्वम् | परिमितविपयकत्वम् | ४९–१८ |
| गाथा | आर्या | ५०–२४ |
| लक्ष्य वोपनिष्ठम् | लक्ष्ये वोपनिष्टम् | ५६–१४ |
| धेनुर्नवप्रसूतिका | धेनुःस्यान्नवसृतिका | ६०– ३ |
| संयोग | वत्ससंयोग | ६०– ४ |
| अवस्थानम | अवस्थानम् | ६२–२९ |
| व्यञ्जना नेत्युच्यते | व्यञ्जनेत्युच्यते | ६४–२७ |
| वाकुर्जिव्हा | काकुर्जिव्हा | ६७–१५ |
| विसमामि | वीसमामि | ६८– ९ |
| अन्यथा शाङ्किष्टाः | अन्यथाऽशाङ्किष्टाः | ६९– ८ |
| मध्यणिन्यायेन | मध्यमणिन्यायेन | ६९–२४ |
| गाथा | गीति | ६९–२६ |

| अशुद्धम् | शुद्धम् | पृष्ठस्य पङ्क्तौ |
|---|---|---|
| कदली श्रेणि | कदलीश्रेणि | ७२– ३ |
| कामुकस्योरिक्तिरियम् | कामुकस्योक्तिरियम् | ७२–२१ |
| विभ्रमो | विभ्रमः | ७२–२९ |
| विसामो | वीसामो | ७४– २ |
| उदाहररि | उदाहरति | ७४– ६ |
| उपगीतिश्छन्दः—लक्षणात् | गाथा छन्दः। लक्षणमुक्तं प्राक् ( ३ पृष्ठे ) | ७४–२८ |
| इन्द्रवज्रा छन्दः—लक्षणात् | उपजातिछन्दः "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति लक्षणात्। अन्तरोदीरिते इन्द्रवज्रोपेन्द्रवज्रारूपे लक्ष्मणि | ७९–२२ |
| एव | एवम् | ७८–२४ |
| सुखितमास्व | सुखितमास्स्व | ८२– ४ |
| आस्व | आस्स्व | ८२–१७ |
| सदयहृदयम् | सहृदयहृदयम् | ८३–२२ |
| समाजिकानां | सामाजिकानां | ८९– ९ |
| सहकारित्वैर्व्यपदेश | सहकारित्वव्यपदेश | ९१–२९ |
| इत्यादिको | रत्यादिको | ९२– ३ |
| इन्द्रवज्रा | उपजातिः | ११६–१० |
| चेतो विस्तार बोध्यम् | चतोविस्तार इति बोध्यम् | ११७– ९ |
| कुशक | कुशिक | ११९– ४ |
| सुमित्रोक्तिः | सुमन्त्रोक्तिः | ११९– ४ |
| सहचरी स्कन्धे | सहचरीस्कन्धे | ११९–२२ |
| विषमपि | उत्कटविषमपि | १२९–१९ |
| ब्रह्मणत्वाभावे | ब्राह्मणत्वाभावे | १४३–११ |
| गाथा | आर्या | १४९–२० |
| अलंकारो व्यङ्ग्यः | अलंकारो वा व्यङ्ग्यः | १४७– ३ |
| अल्ंकारणेत्यर्थः | अलंकारेणेत्यर्थः | १९२–१२ |

| अशुद्धम् | शुद्धम् | पृष्ठस्य पङ्क्तेः |
|---|---|---|
| स्तिछन्तीति | तिष्ठन्तीति | १५४– ४ |
| मडलमणं | मडलमण्ण | १५६– ३ |
| प्रथमजवनिकान्तरे कर्पूरमञ्जरी नायिका प्रति विचक्षणानाम्न्याः सख्या उक्तिरियम् | प्रथमजवनिकान्तरे देव्या विभ्रमलेखायाः निदेशेन विचक्षणानाम्न्या सख्या कृतं वसन्तवर्णनमिदम् | १५७–१७ |
| उद्गीतिश्छन्दः। लक्षणमुक्तं प्राक् (१९८ पृष्ठे) | गीतिश्छन्दः। लक्षणमुक्तं प्राक् (३ पृष्ठे) | १५९–२६ |
| तणु अवि | तणुअं वि | १६०– ४ |
| तन्वपि | तनुकमपि | १६०–१६ |
| तन्वपि | तनुकमपि | १६०–२१ |
| प्रकशयतीति | प्रकाशयतीति | १६६–२३ |
| छायाया | च्छायाया | १६७–१९ |
| सख्यैवं | सख्येवं | १६८– ३ |
| पदप्रकश्यत्वे | पदप्रकाश्यत्वे | १६९– २ |
| पलको | फलको | १७०– ९ |
| उज्ज्वविशिष्ट | उज्ज्वलशिष्ट | १७१–१७ |
| इति चामरः | इति चामरः। उद्गीतिश्छन्दः, "आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः। सोद्गीतिः किलकथिता तद्वद्यत्यंशसंयुक्ता ॥"– इति लक्षणात्। | १७५–२० |
| आत्राधरो | अत्राधरो | १७६–२१ |
| निर्वेदोन्माददयो | निर्वेदोन्मादादयो | १७८–१९ |
| स्वतः संभवित्वे | स्वतःसंभवित्वे | १८४– ८ |
| स्वतः संभवित्वात् | स्वतःसंभवित्वात् | १८४– ९ |
| संभवित्वाभावात्प्रौढोक्ति | सभवित्वात्प्रौढोक्ति | १८४–१४ |
| आह्लोल | ओह्लोल | १८९–१३ |
| सिद्धे नालंकारेण | सिद्धेनालकारेण | १८९–१८ |

| अशुद्धम् | शुद्धम् | पृष्ठस्य पङ्क्तौ |
|---|---|---|
| तारुणाय | तारुण्याय | १८५–२२ |
| स्मशाने | श्मशाने | १८७– १ |
| स्मशाने | श्मशाने | १८७– १ |
| वालमाप्राप्त | वालमप्राप्त | १८८– २ |
| स चोदाहृतः | ते चोदाहृताः | १८८–२८ |
| सूत्रर्थः | सूत्रार्थः | १८९– ९ |
| धावित्वेवत्यनेन | धावित्वेवेत्यनेन | १९१–१३ |
| रागौत्कण्ठ्यात् | रागौत्कव्यात् | १९१–१५ |
| धात्वर्थौपास्थितेः | धात्वर्थोपस्थितेः | १९२–२५ |
| वैयाकरभूषणे | वैयाकरणभूषणे | १९३–२७ |
| कर्मण | कर्मणः | १९५–१२ |
| प्रचीन | प्राचीन | १९६–२८ |
| प्रत्यत्यस्य | प्रत्ययस्य | १९८–१६ |
| त्वकर्तृक | त्वत्कर्तृक | १९९–१२ |
| तादृशश्वासौ | तादृशश्चासौ | २०४–२७ |
| उपचम् | उपचयम् | २०८–१४ |
| इमनिजा | इमनिचा | २०८–२५ |
| भावे | भवे | २११–२३ |
| प्राचामिव | प्राचामेव | २२८–१२ |
| तद्धर्मप्राप्तरेव | तद्धर्मप्राप्तेरेव | २३१–२२ |
| सउणि कोला | सउणिकोला | २३९– ३ |
| अंगाई | अंगाइं | २३९– ४ |
| अनपरमः | अनुपरमः | २४०–२७ |
| शषोङ्कं | शेषाङ्कं | २४४– ८ |
| मीमांसकानां नैयायिकानां च मते | मीमांसकानां मते | २४८–१६ |
| नैमितिकस्य | नैमित्तिकस्य | २५४– ४ |
| प्रकरणान्तरादिति | प्रमाणान्तरादिति | २५७–१४ |
| अभिधारूव्यापारेण | अभिधारूपव्यापारेण | २६०–११ |
| प्रतिपतॄन् | प्रतिपत्तॄन् | २६३– १ |

| अशुद्धम् | शुद्धम् | पृष्ठस्य पङ्क्तौ |
|---|---|---|
| वोधून् | वोद्धून् | २६३–२८ |
| वक्तृपातिपत्त्यादि | वक्तृप्रतिपत्त्यादि | २६४– १ |
| विरहिण्योदि | •विरहिण्यादि | २६४–१६ |
| (२३७ पृष्ठे) | (७९ पृष्ठे) | २६९–२९ |
| ल्युट् | घञ् | २६७–२९ |
| दिअसअं | दिअहए | २७३– ४ |
| महं णुमज्ज | मह णिमज्ज | २७३– ९ |
| रासो | रोसो | २७६– ५ |
| विपरिअ | विपरीअ | २७७– १ |
| रसाउलो | रसाउला | २७७– २ |
| ठक्केइ | ढक्केइ | २७७– २ |
| रासो | रोसो | २७७– ७ |
| व्याप्य भ्रमणा | व्याप्यभ्रमणा | २८२–१२ |
| संदिग्धा सिद्धि | सादिग्धासिद्धि | २८३–१३ |
| तत्तद्भमणा | तत्तद्भ्रमणा | २८४– ७ |
| कान्तमाति | कान्तमपि | २८८– ३ |
| प्रियानियोगेन | प्रियवियोगेन | २९०–१६ |
| कापटता | कपटता | २९१–२२ |
| आसप्ति | आसमाप्ति | २९२– ७ |
| किंचिदह्लाद | किंचिदाह्लाद | २९३–१८ |
| अनन्दांशे | आनन्दांशे | २९४–२७ |
| कस्यचित्पररम्परया | कस्यचित्परम्परया | २९९–२१ |
| शार्दुलविक्रीतं | शार्दूलविक्रीडितं | ३००–२९ |
| शेपे पट्टी | शेपे पष्ठी | ३०१– ९ |
| सपिर्मे स्तादित्याशस्ते | सर्पिर्मे स्तादित्याशास्ते | ३०१– ९ |
| पदमित्याकरः | पदमित्याकारः | ३०१–१४ |
| पुल्लिङ्ग | पुंलिङ्ग | ३०२–१९ |
| निहातार्थपद | निहतार्थपद | ३०३–२६ |
| नाय | नायं | ३०४– ८ |

| अशुद्धम् | शुद्धम् | पृष्ठस्य पङ्क्तौ |
|---|---|---|
| विलोक्येय | विलोक्येयं | २०४–१९ |
| त्वस्य | त्वस्य | २०५–१७ |
| अत्र हि शब्दः | अत्र हिशब्दः | ३०६– १ |
| जङ्घाकाण्डेति । वाणभट्टकृते चण्डीशतके पद्यमिदमिति भाति । भर्तुः | जङ्घाकाण्डेति । भर्तुः | ३०८–२९ |
| पाठे | पाठ | ३१०–२८ |
| वन्दी वन्द्यां | वन्द्यां वन्द्यां | ३१४– ८ |
| वर्णस्यैव | वर्ण्यस्यैव | ३१८– ८ |
| धर्मं भेजे | धर्मं भजे | ३२७–२८ |
| क्वचिन्नामदपयोः | क्वचिन्नामपदयोः | ३२९–१८ |
| नञतपुरुषो | नञ्तत्पुरुषो | ३२९–२७ |
| भयकारी | भयकरी | ३३१–१७ |
| सोम्यः | सौम्यः | ३३१–२६ |
| २३७ पृष्ठे | ७९ पृष्ठे | ३३४–१९ |
| तद्भान्ति | तद्भ्रान्ति | ३३९–१४ |
| वाक्गयतं | वाक्यगतं | ३४०–२४ |
| विविक्षितत्वात् | विवक्षितत्वात् | ३४१–१६ |
| गाथा | आर्या | ३४२–१२ |
| वच्यमिति | वाच्यमिति | ३४३–२३ |
| यथा श्रते | यथाश्रुते | ३४९–२८ |
| विवक्षते | विवक्षिते | ३५८– ४ |
| इन्द्रवज्रा | उपजातिः | ३६०–२९ |
| ११६ पृष्ठे | ७९ पृष्ठे | ३६०–२९ |
| अतिशयने | अतिशयेन | ३६१–२६ |
| निर्यानं | निर्यातनं | ३६९–२७ |
| श्रुतिकटोस्तुं | श्रुतिकटोस्तु | ३७१– ८ |
| सहितां | संहितां | ३७४–२९ |
| चिङ्कित | चिङ्क्किति | ३७९–१७ |
| गुरूत्वात् | गुरुत्वात् | ३७७–१० |

